## [ त ]

मन्त्रप्रतीकम्

अथ तृतीया ।

१ २ ३ १ २ ३ १उ
सयोजत*उरुगायस्यजूतिं

३ १ २ ३ १र २र
वृथाक्रीडन्तम्मिमतेनगावः ।

३ १ २ ३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो

१ २ ३ १ २ ३ १ २ ३ २
दिवाहरिर्द्दृदृशेनक्तमृज्रः ॥ ३ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति । "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः । किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

* "सरंयत"—इति ऋ० पाठः ।

† ऋ० वे० ७, ४, १२, ३ ।

‡ 'उरुगायस्य—बहुविधस्य गामस्य'—इति वि० ।

¶ 'जूतिं—प्रतिगमनम्'—इति वि० ।

§ 'परीणसं—परि समन्ताद् गावो नीयन्ते परीणसः, तम्'—इति वि० ।

न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी* विस्पष्टः प्रकाशयुक्तो दृश्यते† ॥ [ददृशे—दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः ॥ ४‡ ॥

"स्वानासः" अभिषव-वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" श्रवोभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

२ २ ३ १ २ ३ १र २र
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव ॥ ५ § ॥

---

* 'ऋजुः—ऋ गतौ नक्तञ्च भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ६, ७, ३४।

¶ यूपस्य गर्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्यानसोऽधः प्रञ्चं खनत्युपरवानधरादि करोत्यवटवदिति ( ८, ४, २५ )"। यथा यूपस्यावटः क्रियते तथास्याप्युपरवनामकांश्चतुरो गर्तानभिखीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः।

§ ऋ० वे० ६, ७, ३४।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १२ २र ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।
३ २उ ३ १ २ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होतृभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोर्विकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ६, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः अभ्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरिज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES

Nos. 356, 361, 365, 366, 369, and 371.




---

# Sama Veda Sanhita,

WITH THE COMMENTARY OF

SA'YANA A'CHA'RYA.

EDITED BY

SATYAVRATA SA'MAS'RAMI'.

EDITOR OF THE HINDU COMMENTATOR.

---

VOL. IV.

---

CALCUTTA. 

PRINTED BY N. K. SIRCAR, AT THE GANEŚA PRESS.

1877.

अथ सप्तमी ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
परिस्वानासइन्दवोमदायबर्हणागिरा ।
१ २ ३ १ २
मधोअर्षन्तिधारया ॥ ७ * ॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्वानासः"–"परिसुवानासः"—इति पाठौ, "मधोः" –"सुताः"—इति च ॥ ७ ॥

अथ अष्टमी ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आपानासोविवस्वतोजिन्वन्तउषसोभगम् ।
२ ३ २ ३ १ २
सूराअण्वंवितन्वते ॥ ८ † ॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० वे० ९, ७, २४ ।

† ऋ० वे० ९, ७, १८ ।

‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि० ।

सोमाः "अण्व वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

१ २ १ २ ३ १ २ १ २ ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।

१ २ १ २ ३ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी।

३ १ २ २ १ २ ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।

२ १र २र ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अण्व वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि॰।

† ऋ॰ वे॰ ९, ७, २५।

‡ "हरसः"—इति तु ऋग्वेदीयच्छेदः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृतापि—'हरसे हर्त्रे'—इति।

¶ ऋ॰ वे॰ ९, ७, २५।

# सामवेदसंहिता

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता,

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

चतुर्थो भागः।

॥ उत्तरार्च्चिकः ॥

चतुर्थादि-प्रपाठक-चयात्मकः ॥

कलिकाता

गणेशयन्त्रे मुद्रितः।

अब्दाः १८९५।

"समीचीनासः" समीचीनाः* "जानयः" जाति-सङ्ख्याः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आसत" व्याप्नुवन्ति ॥

"आसत'-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

२ ३ १ २ ३ १ १ ३ १ २ ३ १ २ ३ १
नाभानाभिन्न आददे चक्षुषा सूर्य्यन्दृशे।
३ १२ २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्येसचा"—इति पाठौ ॥ ११ ॥

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जानयः—सप्त जनाः, वषट्कारिणः— होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ९, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहते दशापवित्रात् सोमम्'—इति वि०।

अथ द्वादशी।

२ १ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २

अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।

१ २ ३ १ २

सूरःपश्यतिचक्षसा॥ १२ *॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति"॥

"प्रियम्"-"प्रिया"—इति पाठौ‡॥१२॥

२ २ २ र १ २ ५

॥ पार्थम्॥ ओ३हो३होयि। प्रकावियाम्। उशा

र २ ३ ४ ५ २र र १र २ १ २ ३ ४

ने। बब्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविव

५ ० १ २ १ २ ३ ४ ५ २ र १

क्ती। मद्विव्रताः। शुचिव। धूःपवाकाः। पदावरा।

२ १ २ २ ४

हो३अभि। आ३४३यि। ती३रा ५ यिभा ६ ५ ६न्॥(१)

२ १र २ १ र २ ३ ४ ५ २ र १

प्रचऌसासाः। तृपला। वग्नमक्ता। अमादस्ताम्।

२१ २ ३ ४ ५ २ र १ २ १ र

वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नऌ

* ऋ० वे० ६, ७, ३५।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

## ॥ मन्त्राणामकारादिक्रमेण सूची ॥

२ ४ ५ २ १ १ १ २ ४
सखायाः । दुर्मर्षंवा । णा३म्प्रव । दा३४३ । तो३सा

२ र १ २ १ र १ २ ४ ५
५काई५६म् ॥(२) सयोजनायि । उरुगा । यस्यजूतीम् ।

२ र १र १ १ १२४ ५ १र १
वृथाक्रीडा । जा ३ म्मिम । तेनगावाः । परीणसाम् ।

२ १ र २ ३ ४ ५ १ २ १ र १
कृणुते । तिग्मश्टङ्गाः । ओ३हो३होयि । दिवाद्दरा

२ १ र २ १ ४
यिः । ददृश्रे । ना३४३ । क्ता३मा५ऋ्याई५६ः(३) ॥५*॥ [१]

१र र १ २ १र
॥ वाराहम ॥ हाउहाउ । ऊप । प्रकावियाम ।

२ १ र १ २ ३ ४ ५ २ र१र र २ १ २
उशने । वभ्रुवाणाः । देवोदेवा । ना३ञ्जनि । मा

२ ४ ५ २ १ २ २ ३ ४ ५ १ २र
विवक्ती । मद्दिव्रताः । शुचिवा३ । धूःपवाकाः । पदा

२ १ २ २ ४
वरा । हो ३ अभि । या ३ ४ ३ यि । तो३रा५यिभा६

२ १ र २ १ र १ २ ४ ५ २
४ ६न ॥(१) प्रहंससासाः । तृपला । वग्नुमच्छा । अ

१र २ १ २ ३ ४ ५ २ १र
मादस्ताम् । वृषग । णाअयासूः । अङ्गोषिणाम् ।

२ २ ३ ४ ५ २ १ २ ० १ २
पवमा । नंसखायाः । दुर्म्मर्षंवा । णा३ंप्रव । दा

---

* ऊ० गा० ६प्र० २आ० ५सा० ।

२ ४ १ १र १ १
३४३। तो३सा५काइ६५६म् ॥(२) सयोजतायि। उरु
र २ ३ ४ ५ २ १र र २ १ १ २
गा। यस्यजूतीम्। वृथाक्रीडा। ता३म्मिम। तेन
४ ५ २ १र २ १ र २ ३ ४ ५ २र
गादाः। परीणसाम्। कृणुते। तिग्मशृङ्गाः। हाउ
र १ १ १र २१ र २ २
हाउ। ऋप्। दिवाहरायिः। ददृशोना३४३। क्ता
४
३मा५र्त्रा६५६:(३) ॥ १९ * ॥ [२]

२ र १ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रकाावियाम्। उशनेवा। ब्रू
१र २र र १र २र १ १
२वाणाः। देवोदेवा। नाञ्जनिमा। वा२यिवक्तायि।
२ १ २ १ १र २ र १
महिव्रताः। शुचिवन्धुः। पा२वाकाः। पदावरा।
२र १ १र १ १ १र
होअभियायि। ती२भा३नाउ ॥(१) प्रहंसासाः।
२ १ र १ २ र १ २ १
तृपलावा। म२मच्छा। अमादस्ताम्। वृषगणाः।
१र २ र १ २ १ र १र
आ२यासूः। अङ्गोषिणाम्। पवमानाम्। सा२खा
२ १ २ १ १र २ १
याः। दुर्मर्षेवा। णांप्रवदाः। ती२साका३माउ ॥(२)

* ऊ० गा० १६प्र० २ख० १९सा०।

२ र १     १ १ र     १र     १र १र
सयोजतायि। उरुगाया। स्या२जूतीम्। वृथाक्रीडा।

१ १     १र     २ र १     २ १ र
तम्मिमते। ना२गावाः। परीणसाम्। कृणुतेतायि।

१     २ र १     १ १ र     १ १
ग्मा२ष्टगाः। दिवाश्चरायिः। दद्दशेना। क्ता२मृज्रा

१ १ १ १
३१उ। वा२३४५ः(३) ॥ ३ * ॥[३]

३ ५     ३ २     ४ ५
॥ कुत्ससारथीयम् ॥ हो४वा। उद्भवा३। होवा।

२ १र २ १     १ १ र     २ ३ ४ ५     १र१र १र     २
प्रकावियाम्। उशने। वब्रुवाणाः। देवोदेवा। ना

१     २ ३ ४ ५     २ २ १     २ १     २ ३
३ञ्जनि। माविवक्ती। मच्छिव्रताः। शूउचिव। धूःप

४ ५     २ १र २ १     २ १     २ ३ ४ ५     २
वाकाः। पदावरा। हो३अभि। ऐतिरेभान्॥(१) प्र

१ २र १     २ १ र     २ ३ ४ ५     २ १र २ १     २ १
हꣳसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष

१ २ ३ ४ ५     २ १र २ १     २ १ र     २ ३ ४
ग। णायअासूः। अङ्गोषिणाम्। पवमा। नꣳसखा

५     २ १ २ १     २ १     २ ३ ४ ५     २
याः। दुर्मर्षवा। णा३प्रव। दन्तिसाकाम्॥(२) स

१ २ १     २ १ र     २ ३ ४ ५     २ १र १र १     २
योजतायि। उरुगा। यस्यजूतीम्। वृथाक्रीडा। ता

* ऊ० गा० १३प्र० १अ० ३सा०।

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|

१ २ ३ ४ ५ २ १ २ २ १ १ १ १ २ १ २
इम्निम। तेनगावाः। परीणसाम्। कृणुते। तिग्म
४ ५ २ १२ २ १ १ २ १ २ २ २ ४ ५ २
शृङ्गाः। दिवाहरायिः। ददृशे। नक्तमृज्राः। हो४
५ २ २ ४ ५ ५
वा। उऊवा३। होवा६हाउवा(३)॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
प्रथमः खण्डः॥ १ ॥

---

अथ द्वितीयखण्डे —

अस्यग्रमिति द्वादशर्चं† प्रथमं सूक्तम्;

तत्र, प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ १
अस्यग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः।
३ १ २ ३ १ २
विदानाअस्ययोजना॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता-योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "असृग्रम्" हविर्द्धानात् सृज्यन्ते॥

"योजना"-"योजनम्"—इति पाठौ॥ १ ॥

---

* ऊ० गा० १२प्र० २अ० ६सा०।

† 'द्वितीयो द्वादशर्चः'—इति वि० पाठः-इति यावत्।

‡ ऋ० वे० ६, ७, १८।

अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १र २र

प्रधारामधोअग्रियोमहीरपोविगाहते।

३ २ ३ २ ३ १ २

हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हविरात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "विगाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपतन्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३ २ ३ २ २ ३ १र २र ३ १ २

प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।

२ ३ २ ३ १ २ ३ २

सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

---

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ६, ७, १८।

‡ ऋ० वे० ६, ७, १८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदग्रन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

“सद्म” यज्ञगृह “अभि” प्रति “वने” उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥

“वृषोअचिक्रदत्”—“वृषावचक्रदत्”—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

२ ३ १र २र ३ २ ३ १ २ ३ १र २र
परियत्काव्याकविर्नृम्णापुनानोअर्षति।
१र २ १ २
स्ववाजीसिषासति॥ ४ * ॥

“कविः” क्रान्तकर्मा सोमः “नृम्णा” नृम्णानि बलानि† “पुनानः” शोधयन् “काव्या” काव्यानि कवि-कर्माणि स्तोत्राणि “यद्” यदा “परि अर्षति” परिगच्छति, तदा “स्वः” स्वर्गं “वाजी” बलवान् अन्नवान्चेन्द्रः‡ “सिषासति” यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति ॥

“पुनानः”--“वसानः”—इति पाठौ ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ २उ ३ २ ३ १ २
पवमानोअभिस्पृधोविशोराजेवसीदति।
१ २ ३ १ २ ३ १ २
यदीमृण्वन्तिवेधसः ॥ ५ ¶ ॥

---

* ऋ० वे० ९, ७, २८।

† ‘नृम्णा धनेन’—इति वि०।

‡ ‘वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति’—इति वि०।

¶ ऋ० वे० ९, ७, २९।

"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" क्षरन्नेष सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ १ २ १ २ ३ १उ ३ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३ २
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्पृक्तः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या‖ "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "क्षयो"—इति ऋ०-पाठः।

¶ ऋ० वे० ६, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु प्रक्षमसादिषु सीदति'—इति वि०।

‖ 'मती—बुद्धा ऋत्विग्यजमानानाम्'—इति वि०।

[ ज ]

अथ सप्तमी ।

२ ३ १र   २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति ।
२ ३ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः क्रयणाभिषवादिभिः "रण"¶ रमते, "सः" यजमानः "वायुम्," इ,, न्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी ।

२ ३ १र २र ३ १ ३ १ २   ३ १ २
आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§ ।
३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ०-पाठः ।

† ऋ० वे० ६, ७, १९ ।

‡ धर्मभिरिति ऋग्वेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च ; विवरण-कृद्व्याख्यानन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति ।

¶ "रणाः" दीर्घाश्रुतिः "द्व्यचोऽतस्तिङः ( ६, ३, १३५ )"—इति तत्र दीर्घः ।

§ "मित्रावरुणाभगंमध्वः"—इति ऋ०-पाठः ।

‖ ऋ० वे० ६, ७, १९ ।

येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भगं"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "शक्मभिः" सुखैः‡ सङ्गच्छन्तइति शेषः ॥ ८ ॥

अथ नवमी।

३ १ २ ३ २उ ३ १ २ २ १ २
अस्मभ्यꣳरोदसीरयिम्मध्वोवाजस्यसातये।
२ ३ १ २ ३ १ २
अवोवसूनिसञ्जितम् ॥ ९ ¶ ॥

हे "रोदसी" द्यावापृथिव्यौ ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मस्यान्नस्य "सातये" लाभाय§ "अस्मभ्य" "रयिं" धनं "अवः" अन्नञ्च‖ "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्जयन्तं** प्रयच्छतमित्यर्थः ॥ ९ ॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम्। विवरणकृता तु सुष्ठूच्यते—'मित्रे, वरुणे, भगे-सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति।

‡ 'शक्माभिः—शक्तैः कर्मभिः'—इति वि०।

¶ ऋ० वे० ९, ७, ०९।

§ 'सातये—दानार्थम्'—इति वि०।

‖ अवः—अन्नं यशो बलं वा'—इति वि०।

** 'संयतं—सम्यक् यतम्'—इति वि०।

अथ दशमी।

२ ३१ २ ३ १ ३१ २ ३१ १
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।
२ ३ १ २३ १ १
पान्तमा पुरुस्पृहम् ॥ १० * ॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ ३ १र २र ३ २उ ३ १ २ ३ १ २
आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्।
२ ३ १ २३ १ २
पान्तमा पुरुस्पृहम्॥ ११ ‡ ॥

हे सोम! "मन्द्र" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्र" मेधाविनं त्वां तथा "मनीषिण" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया आ इत्युपसर्गः

---

* ऋ० भा० ६, १, २, २ (२ भा० ५६ पृ०)=ऋ० वे० ७, २, ६, ३।

† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।

‡ ऋ० वे० ७, २, ६, ४।

ज्ञात:*; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभि: स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी।

२ ३ १र १र२र ३ १ २ ३१
आरयिमासुचेतुनमासुक्रतोतनूष्वा।
२ १ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रतो" शोभन-प्रज्ञ सोम! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे। किञ्च, "सु चेतुनम्" [चिती सञ्ज्ञाने (भ्वा० प०) भावे औणादिक उन प्रत्यय:] सुज्ञानञ्च। किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे। तथा "पान्त" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभि: काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीय: खण्ड: ¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं बलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं तत्'—इति, 'आविप्रम्—अतिशयेन विपश्चितम्'—इत्यादि च।

† ऋ० वे० ७, १, ६, ५।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्'—इत्यादि।

¶ 'उक्तं वक्ष्यमाणम्'—इति वि०।

मन्त्रप्रतीकम् | पृष्ठम्

अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा ।

३ १ २ ३ १ १ ३ १ २ ३ १
मुर्द्धानन्दिवोअरतिम्पृथिव्या
२ ३ २ ३ २ ३ २ १ २
वैश्वानरमृतआजातमग्निम् ।
३ २ ३ २ ३ १ २ ३ १ २
कवि(ꣳ)सम्राजमतिथिञ्जनाना
३ १ २ १ २ ३ २
मासन्नःपात्रञ्जनयन्तदेवाः ॥ १ † ॥

"मूर्द्धानं" शिरोभूतं, कस्य ? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम ( निघ० ३,१०,६ )। निमित्त-सप्तम्येषा (२,३,३६ वा०)]ऋतनिमित्तम् "आ" आभिमुख्येन जातं सृष्ट्यादावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [ यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [ द्वितीयार्थे सप्तमी (३,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

---

* 'इदानीमाग्नेयम्'—इति वि० ।

† ऋ० प्रा० १, २, २, ५ (१ भा० २०४ पृ० ) = य० वे० ७, २४ = ऋ० वे० ४, ५, ९, १ ।

मन्त्रप्रतीकम् | पृष्ठम्

"देवाः" स्तोतारः ऋत्विजः देवा एव वा "आ जनयन्त" यशाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमानꣳ
२ ३ २ ३ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते।
२ ३ १ २ ३ १ १ २
तवक्रतुभिरमृतत्वमायन्
१र २ ३ २ ३ १र २र
वैश्वानरयत्पित्रोरदीदेः॥ २ *॥

हे "अमृत" मरण-रहिताग्ने! "विश्वे देवाः" स्तोतारः "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने! "यद्" यदा "पित्रोः" पालयित्रोः द्यावा-पृथिव्योर्मध्ये "अदीदेः" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभिः" कर्मभिः ज्योतिष्टोमादिभिर्यागैः "अमृतत्वम्" देवत्वम् "आयन्" यजमानाः प्राप्नुवन्ति॥ २॥

* ऋ० वे० ४, ५, ९, ४।

मन्त्रप्रतीकम् पृष्ठम्

अथ तृतीया।

१　२ ३ १　३　१ २　३ २
नाभिंयज्ञानाꣳसदनꣳरयीणां

३ १　२　३ २ ३ १र　२र
महामाहावमभिसन्नवन्त।

३　२ क २र　३ १ २
वैश्वानरꣳरथ्यमध्वराणां

३ १ २ ३ १ २　३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः॥ ३ *॥ ३

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम्" आह्वयन्ते अस्मिन्नाहुतय इत्याहावः तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति। तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं रंहितारं गमयितारं‡ "यज्ञस्य" "केतुं" प्रज्ञापकम्¶ एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति॥ ३॥ ३

* ऋ० वे० ४, ५, ९, २।

† 'नाभिं यज्ञानां—प्रधानभूतं सदनम्'—इति वि०।

‡ 'रथ्यं—रथभूतं रंहणीयं वा'—इति वि०।

¶ 'केतुं—ध्वजम्'—इति वि०।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि०।

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २ ३ १

प्रवोमित्रायगायतवरुणायविपागिरा।

१ २ ३ २ ३ २

महिक्षत्रावृतम्बृहत्॥ १ *॥

हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्याप्तया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत्]। हे "महिक्षत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं † "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [अथवा "महत्" प्रभूतम् "ऋतं" स्तोत्रं शृणुतमिति शेषः॥ १॥

अथ द्वितीया।

३ १ २ २ ३ १ २ ३ २ ३ १र २र

सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च।

३ २ ३ १ २ ३ २

देवादेवेषुप्रशस्ता॥ २ ‡॥

"या" यौ "मित्रश्च" "वरुणश्च" [परस्परापेक्षया च-शब्दः] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

---

* ऋ० वे० ४, ४, ६, १।

† 'ऋतं सत्यम्'—इति वि०।

‡ ऋ० वे० ४, ४, ६, २।

उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुत्यौ तौ स्तुत्या गायतेति पूर्वत्रान्वयः ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ २   १२ ३ २ ३ १ २
ता नः शक्तम्पार्थिवस्य महो रायो दिव्यस्य ।
१ २   ३ २ ३ १ २
महि वां क्षत्रन्देवेषु ॥ ३ * ॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्तं" समर्थम्, भवतं दातुमिति शेषः । हे देवौ ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्रं" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः ॥ ३ ॥ ४

अथ तृतीय-तृचे—

प्रथमा ॥

१र   २र   १ २ ३ २ ३ १ २
इन्द्रायाहि चित्रभानो सुता इमे त्वायवः ।
१ २   ३ १ २ ३ १ २
अण्वीभिस्तना पूतासः ॥ १ † ॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र !" अस्मिन् कर्म्मणि "आयाहि" आगच्छ । "सुताः" अभिषुताः "इमे" सोमाः

---

* अत्रैव पुनः ६, ३, ११, १ = ऋ० वे० ४, ४, ६, ३ ।

† य० वे० २१, ३ = ऋ० वे० १, १, ५, ४ ।

मन्त्रप्रतीकम् ... पृष्ठम्

"त्वायवः" त्वां कामयमाना वर्त्तन्ते । "अण्वीभिः"* [अङ्गुलि-नामैतत् ( निघ० २, ५, २ )] ऋत्विजा मङ्गुलिभिः सुता इत्यन्वयः । किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात् ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।
२ ३ १ २ ३ १ २
उपब्रह्माणिवाघतः ॥ २ † ॥

हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्म्मणि आगच्छ । किमर्थम्? "वाघतः" [ऋत्विङ्नामैतत् ( निघ० ३, १८, ३ )] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम् । कीदृशस्त्वम्? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः । "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः! कीदृशस्य? "वाघतः?" "सुतावतः" अभिषुत-सोम-युक्तस्य ॥२॥

अथ तृतीया ।

१र २र ३ १ २ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः ॥ ३ ‡ ॥ ५

---

* 'अण्वीभिः—सूक्ष्माभिः वीथिभिः'—इति वि० ।

† ऋ० वे० १, १, ५, ५ ।

‡ ऋ० वे० १, १, ५, ६ ।

मन्त्रप्रतीकम् | पृष्ठम्

[हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, लोहितोऽग्नेः (नि०१,१५,१-२)"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र! त्वं "ब्रह्माणि" आनेतुम् "आ याहि"। कीदृशस्त्वम्? "तूतुजानः" त्वरमाणः। आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [अन्न-नामैतत् (निरु० नै०६,१६)] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वित्यर्थः ॥ ३ ॥ ५

अथ चतुर्थ-तृचे—

प्रथमा।

१ २  ३ १ ३ १ ३ २ ३ १ २  ३ १ २
तमीडिष्वयोअर्चिषावनाविश्वापरिष्वजत्।
३ १ ३ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया ॥ १ * ॥

हे स्तोतः! "तम्" अग्निम् "ईड़िष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीड़िष्वेति सम्बन्धः ॥ १ ॥

* ऋ० वे० ४, ८, २८, ५।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ ७॥

## ॥ अथ सप्तमोऽध्यायः आरभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा।

१ २ ३ १ २   ३ १ २ १ २
ज्योतिर्यज्ञस्यपवतेमधुप्रियं
३ २ ३ १ २   ३२ ३ १ २
पितादेवानाञ्जनिताविभूवसुः।
१ २ ७ १ २   ३ १ २   ३क २र
दधातिरत्नꣳस्वधयोरपीच्यं
२ १ २   ३ १ २ ३ १र   २र
मदिन्तमोमत्सरइन्द्रियोरसः॥ १‡ ॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

* 'त्रिणवस्तौमिकमिदानीं षष्ठमहः'—इति वि०।

† 'त्रयस्त्रिंशद्देवताष्टकम्'—इति वि०।

‡ ऋ० वे० ७, ३, १७, ५।

अथ द्वितीया।

१ ३ २ ३ १ २ ३ १ २ २ २ ३ १ २
यद्द्व आविवासति सुम्नमिन्द्रस्य मर्त्यः।

३ १ २ ३ १ २ ३ २
द्युम्नाय सुतरा अपः ॥ २ * ॥

"यः" "मर्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [ चतुर्थ्यर्थे षष्ठी ( २, ३, ६२ ) ] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "द्युम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तानोवाजवतीरिषआशून्पिपृतमर्वतः।

१ २ ३ २ ३ १ २
एन्द्रमग्निञ्च वोढवे ॥ ३ † ॥ ६

हे इन्द्राग्नी ! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "इष्टीः" [ यद्वा, वाजो बलं तद्वतीः इषः अन्नानि ] "आशून्" शीघ्रगान् "अर्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

* ऋ० वे० ४, ८, २९, १।

† ऋ० वे० ४, ८, २९, २।

तत्र शोध्यत इत्यर्थः। रसो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)]; "अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्यो-र्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३क २र ३
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ २ ३ १ २ ३ १
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ २ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ ३ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

---

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिकृतं दीप्तिकरं यज्ञस्य पवते पूयते मधुरसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य स्वभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, ३, १४, १।

पूरयतम् प्रयच्छतम्। किमर्थम्? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु ॥ ३ ॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य तृतीयः खण्डः * ॥ ३ ॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा।

१ २ २ २ ३ १ २ १ २उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतꣳ
२ २ ३ २र २र ३ १२
सखासख्युर्नप्रमिनातिसङ्गिरम्।
१२ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति
१ २ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा ॥ १ ‡ ॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानमुदरं "प्रो अयासीत्" प्रैव गच्छति; गत्वा च "सखा" सखिभूतः "सख्युः"

---

* 'उक्तं प्रातःसवनं चतुर्विंशस्तोमिकम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनम्। ऊषापवस्वधारयेति सन्तनि-प्रभृतीनि सामानि माध्यन्दिनीयार्थानि, पुनानः सोमधारयेति कण्व-रथन्तर-प्रभृतीनि सामानि बार्हस्प-मानि'—इति वि०।

‡ ऋ० सा० ६, २, १, ४ (२भा० १७९पृ०)=ऋ० वे० ७, ३, ११, १।

सोमः "वाजी" वेजनवान् गमनवान् [ यद्वा, अश्वसदृशः ] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति । कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [ दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः ] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* "हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्धितकरस्य यज्ञस्य "सदनेषु" "सीदति" निषण्णो भवति† । कीदृशः सन् ? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ २ २ ३

अग्रेसिन्धूनाम्पवमानोअर्ष

१ २ ३ १ २ ३ १र २र

स्यग्रेवाचोअग्रियोगोषुगच्छसि ।

२ ३ १ २ ३ १र २र

अग्रेवाजस्यभजसेमहद्धनꣳ

३ २ ३ १ २

स्वायुधःसोतृभिःसोमसूयसे ॥ ३¶ ॥ १

* 'विश्वस्य द्रष्टा'—इति वि० ।

† 'मित्र आदित्यविशेषः । अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थ-लक्षणेन सम्बन्धेन तस्य इष्टेषु द्रोणकलशप्रभृतिषु सीदति'—इति वि० ।

‡ 'अविभिः—[illegible]ीयाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । अवेः सम्भूतेन दशापवित्रेण सिन्धुभिः उदकैरित्यर्थः'—इति वि० ।

¶ ऋ० वे० ७, १, १४, २ ।

इन्द्रस्य "सङ्गिरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्र मिनाति" हिनस्ति, किञ्च "मर्य्य इव युवतिभिः" मर्त्त्यो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-शीलादिभिर्वसतीवरीभिरद्भिः सह "समर्षते" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-वित्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्त्यो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते॥

"शतयामना"—"शतयाम्ना"——इति पाठौ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रवो धियो मन्द्रयुवो विपन्युवः
२ १ २ ३ १ २
मनस्युवः संवरणेष्वक्रमुः।
२ ३ १ २ ३ क २र ३ २ ३
हरिं क्रीडन्तमभ्यनूषत स्तुभो
२ ३ २ ३ २ ३ १ २
भि धेनवः पयसेदभिश्रयुः॥ २ *॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः

* ऋ० वे० ७, ३, १५, २।

† 'धियः—बुद्धयः'—इति वि०।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावानामुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्योदकं जनयितुमाहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" अन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन-प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्यादिभिः "सूयसे"† अभिषूयसे॥ ३॥ १

॥ मरुतान्धेनु॥ ज्यो२३४। तिर्यज्ञस्यपवतेमधौ। द्योप्रायाम्। पितादेवानाञ्जनिता। विभूवासू२ः। दधातिरत्नꣳस्वधयोः। अगीचायार२३म्। मादिन्ता२३ ४माः। मत्सरइन्द्रीयोश्राप्रुसाईप्रुड्ः॥(१) आ २३४। भिक्रन्दन्कलशंवाजियौ। द्योषाताथि। पतिर्दिवःशत धारो। विचक्षाणा२ः। हरिर्म्मित्रस्यसदनाथि। धुसी दाता२३यि। मामृजा२३४नाः। अविभिःसि। धूभा

*, † "भजते"—इति "पूयते"—इति च क०-पाठः।

"विपन्यवः" [—स्तोतृ-नामैतत्*) स्तोतारः "संवरेषु" तृण-कटा-वरणोपेतेषु याग-गृहेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह—"स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" स्वीयेन क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं" -"सोमम्मनीषां"—इति च, "पयसेदशिश्रयुः"-"पयसेमशिश्रयुः" —इति च॥ २॥

अथ तृतीया।

१ २   ३१ २ ३ २ ३ २ ३
आनःसोमसंयतम्पिप्युषीमिष

२ ३ १ २ ३ १ २   ३ १ २
मिन्दोपवस्वपवमानऊर्म्मिणा।

२ ३ १ २ ३ २उ ३ १ २
यानोदोहतेत्रिरहन्नसश्चुषी

३१र २र३ १ २ ३ १ २
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम्॥ ३ ‡॥ ७

---

* "विपन्यवः"—इति निखण्टौ मेधावि-नामसु सप्तदशं पदम् (३, १५)।

† 'स्तुभः—स्तोभवत्यः'—इति वि०।

‡ ऋ० वे० ७, ३, १५, ३।

४ १ र ४र र ४ ५ र ४
३यिर्वा५र्षा६५६ ॥(२) आ २ ३ ४ । अ्ग्रे सिन्धूनाम्पवमान

५र ४ ५ १ र र र र २ १
श्री । र्षोर्षासायि । अग्रे वाचोअग्रियोगो । घुगच्छा

१र र १ १
सा २यि । अग्रेवाजस्यभजसायि । महद्धाना २ ३ म् ।

१ २ ५ १र १ १र १ १ ४
सूवायू २ ३ ४ धाः । सोतृभिःसो । मासू ३ या ५ सा६

५ ६ यि(३) ॥]११* ॥ [१]

४र २ ५ ४ २ ३४र ५
॥ वरुणसाम ॥ ज्योतिष्यं । आ ३ स्यपवतोमधुप्रि

१ र र र र र र १ र
याम् । पितादेवानाञ्जनिताविभूवमू२३र्वोयि । दधा

र र १ २ १
तिरत्न७स्वधयोः । अपीचियार३म् । वोयि । मदायि

१ २ १ २
न्तार३माः । मात्सरः । इन्द्रि । यो २ ३ । रसाउवा

४ २ ५ ४ २ ३४र ५ १
३ ॥(१) अभिक्र । दा३न्कलशंवा । जियर्षतायि । प

र र १ १
तिर्द्दिवःशतधारोविचक्षणा २ ३ वोयि । हरिर्म्मित्रस्यसद

र र १ २ १ २ १
ने । घुसीदता२३यि । वोयि । मर्म्मजा२३नाः । आ

* ऊ० गा० ८प्र० ९ख० ११सा० ।

हे "इन्दो" दीप्त! "सोम !" "पवमानः" त्वं "नः" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः । "या" इट् "नः" अस्माकम् "अहन्" अहनि अक्तः "त्रिः" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धेन† "दोहते" । किम् ? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुत्रं दोहते । ता मिषं पवस्वेति समन्वयः ॥

"ऊर्मिणा"-"अभियम्"—इति पाठौ ॥ ३ ॥ ७

२र १र २ १
॥ प्रवद्भार्गवम् ॥ प्रोअयासायित् । इन्दुरिन्द्रा । स्या
१ २ र १ २ १ १
२निष्कृताम् । सखासख्यूः । नप्रमिना । ता२यिस
२ १ २ १ १
ङ्गिराम् । मर्य्यइवा । युवतिभायिः । सा२मर्षतायि ।
२र १ २र १ १र १ १र
सोमःकला । शेशतया । मा२नापथा३१उ ॥(१) प्रवो
१ २ १ १ २ १
धियो । मन्द्रयुवो । वा२यिपन्युवाः । पनस्युवाः ।
२१ १ २ १र २ १
संवरणायि । पू२वक्रमूः । हरिङ्क्रीडा । तमभ्यनू । षा

---

* 'पिप्युषी'—प्यायितम्'—इति वि० ।

† 'असश्चुषी—आनुपूर्व्येण'—इति वि० ।

२ १ २ ४ २
विभिः। सिन्धु। भा२३यिः। वृषाउवा३ ॥(२) अग्रे

५ ४ २ १ ४ र ५ १ र र र
सि। धू३नाम्यवमानः। अर्षसायि। अग्रेवाचोअग्रि

र र १ र र र
योगोषुगच्छसा२३यिहोयि। अग्रेवाजस्यभजसे। मह

१ २ २ २ १ २ १र
ह्वना२३म्। होयि। सुवायू२३धाः। सोतृभिः। सो

१ २ १ २ १ २ १र
म। सू२३। यसाउवा३। ए३। इन्दुःसमुद्रमुर्विया

१र २१११
विभाती२३४५(३) ॥ २* ॥ [२] १

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
असृग्रतप्रवाजिनोगव्यासोमासोअश्वया।

३ १ २ ३ १र २र
शुक्रासोवीरयाशवः ॥ १* ॥

"वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ऊ० गा० १३प्र० १ख० २गा० ।

† ऋ० आ० ५, १, ५, ६ (२भा० ७६४पृ०)=ऋ० वे० ७, १[illegible], ५ ।

‡ "गव्या"—इति ऋ०-पाठः ।

१ १ १२ २ १ १
२तस्तुभाः । अभिधेना । वःपयसायित् । आ२ग्निश्र

२ १ २२ १२ २ १ १२
यू३राउ ॥(२) आनःसोमा । संयतम्पायि । प्यू२षीमि

२ २ १ २ १ १२ २२ २
षाम् । इन्दोपवा । स्वपवमा । ना२ऊर्म्मिणा । यानो

१२ २२ १ १ २ १२
दोषा । तेत्रिरह्वान् । आ२सस्रुषायि । त्नुमद्वाजाः ।

२ १ १२ २ १ १११ १
वन्मधुमात् । सू२वीरियाइमाउ । वा२३४५(३) ॥७*॥ [१]

१ २ २ २
॥ कावम् ॥ प्रवो । अयासीदिन्दुरिन्द्रा । स्यनि

१ १२ २ १
ष्कात्त्र्ता२म् । सखासख्युर्नप्रमिना । तिसङ्गायिरा२म् ।

१ २ १ १ २ ४ ५
मर्यइवयुवतिभायिः । समर्षाता२३यि । सोमा३:काला ।

२२ १ १ २ ४ २ १
ग्रेग्रतायाः२३ । माना३पा५थाई५६ ॥(१) प्रवोवा । धि

२ ० २ १ १ २
योमन्द्रयुवो । विपन्यूवा२ः । पनस्युवःसंवरणायि । षु

१ १ २ २ १ १
वक्रामू२ः । हरिंक्रीडन्तमभ्यनू । षतस्तुभा२३ः । आ

२ ४५ २ १ १ २ ४
भी३धेना । वःपयासा२३यित् । आशां ३ यिश्रा५ यू ६

* ऊ० गा० ४प्र० १ख० ७गा० ।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषामिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया ।

३ १ २ ३ १ २ १ २ १ २ ३ १ २
शुम्भमानाऋतायुभिर्मृज्यमानागभस्त्योः ।
१ २ ३ १ २ ३ १ २
पवन्तेवारेअव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे । कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया ।

१२ २२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा ।
१ २ ३ १२ २२
पवन्तामान्तरिक्ष्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

* ऋ० वे० ७, १, २६, ५ ।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां । 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या ।

‡ ऋ० वे० ७, १, २७, १ ।

१र २ र २र १
५ ६ ॥(२) आनोवा। सोमसंयतम्मायि। प्युषीमायि

१ र २ र १ १र र
षा२म्। इन्दोपवस्वपवमा। नऊर्म्मायिणा२। यानो

र र २ १ १ २ ४ ५ २
दोहतेत्रिरहान्। असश्षा२३यि। त्रूमा३द्वाजा। व

१ १ २ ४
न्मधूमा२३त्। सूवा३यिरा५याथ५६म(३) ॥ १० *॥ [२]

१र २ ३र ५र १
॥ लौशाद्यम् ॥ प्रोअयासीत्। इन्दुरिन्द्रा २ ३।

४ २ १ ५ ३ २र ३ ५ १ ४ २
स्या३निष्कृतम्। सखासख्यु:। नप्रमिना२३। तौ३स

३ ५ ३ २ ३ ४ १ ४ २ ३ ५
ङ्गिरम्। मर्य्य इव। युवतिभा२३यि:। सा३मर्षति।

३र २ २ ४ १र २ ४
सोम:कला। प्रशतया २ ३। मना३पा५थाई५६ ॥(१)

३ १र ३ ५ १ ४ २ ३ ५ ३ २ ३ ५
प्रवोधिय:। मद्रयुवो२३। वा३यिपन्युव:। पनस्युव:।

१ ४ २ १ ५ ३ २ ३र ५ १
सवरणा२३यि। षू३वक्रमु:। हरिक्रीड। तमभ्यनू२३।

४ १ ३ ५ ३ २ ३र ५ १ २
षा३तस्तुभ:। अभिधेना। व:पयमा२३यित्। अशा

४ ३र २ ३र ५ १
३यिश्रा५यू६५६: ॥(२) आन:सोम। संयतपा २ ३ यि।

---

* ऊ० गा० ६प्र० २ख० १०षा० ।

पवन्तां सर्वतः चरन्तु। वस्वित्युक्तं कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि, अन्तरिक्षे भवानि* एवमुक्तप्रकारेण विश्वानीत्यर्थः॥ ३॥ २

पवस्वेति-दशर्चं तृतीय-सूक्तं—

प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २
पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।
१ २ ३ १र २र
इन्द्रमिन्दोवृषाविश॥ १†॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिक्षर किञ्च हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ १.३ १ २ - ३ १
आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।
१र २र ३ २
आयोनिन्धर्णसिस्सदः॥ २¶॥

---

* 'धनानीत्यनुषज्यते'—इति वि०।

† ऋ० आ० ६, १, २, ४ (२भा द्य० ऋ०) वि० ६, ७, १८, १।

‡ 'देवानां भक्तिभूतः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, २।

४ १र २ ५ ३ २र ३ ५ १ ४ १र २
प्यू३षीमिषम् । इन्दोपव । स्वपवमा २ ३ । ना३जर्म्मि
५र ३र २र ३र ५ १र ४ र १ ५र १ १
णा । यानोदोह । तेभिरह्वा२३न् । श्रा३सम्युषी । त्तुम
३र ५ १ १ ४
द्वाजा । वन्मधुमा २ ३ त् । सुवा ३ यिरा ५ या ६ ५
६ म् (३) ॥ ११ * ॥ [३]

३र २ ३ ५ २ २
॥ यज्ञसारथिम् ॥ प्रोश्रायार२३४सीत् । इन्दूरा२३
५ १ २ १ २ १ ३ २ २
४यिन्द्रा । स्यानिष्कृता३म् । द्दोयि । सखासा२३४
५ १ ३ ५ १ २ १ १ १
ख्यू: । नप्रामीर२३४ना । तायिसङ्गिरा३म् । द्दोयि ।
३ २ ३ ५ २ ३ ५ १ २ १ १
मर्य्याई२३४वा । युवातीर२३४भायिः । सामर्षता३यि ।
१ ३र १ १ ५ २र १ ५ १ २र
द्दोयि । सोमा:का२३४ला । प्रशाता२३४या । माना
१ २ १ ३ १ ३ ५ २ १
पथा३ । द्दोर२३४५ई ॥(१) प्रवोधीर२३४यो । मन्द्रायू२
५ १ २ १ २ १ ३ २ २ ५
३४वो । वायिपन्युवा३ः । द्दोयि । पनास्यू२३४वा: ।
१ ३ ५ १ २ १.२ १ ३ २ ३
संवारा२३४णायि । षूवक्रमू३: । द्दोयि । चरायिक्रा

* ऊ० गा० ७प्र० २ख० ११सा० ।

हे "इन्दो" सोम ! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्न-वत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "मही" महत् "स्वरः" पानीयम् "अन्धः" अन्नम् "आवच्यस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २　२२उ ३१ २ ३१२ ३१२

अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।

३१२　३१२

अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३१ २　३१२　२र　३ १ २

महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।

१र　२र　३१२

यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम ! त्वं "यद्" यदा यज्ञे "गोभिः" गोर्विकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "महान्तं" गुणैः

* 'योनिं द्रोणकलशम्'—इति वि० ।

† ऋ० वे० ६, ७, १८, ३ ।

‡ ऋ० वे० ६, ७, १८, ४ ।

५ २ २ ५ १ २ १ १ १
२३४यिडा । तमाभ्या२३४नू । षातस्तुभा३: । हायि ।

२१ ३ ५ २ ३ ५ १ २ १ २
अभायिधे२३४ना । व:पाया२३४सायित् । आग्निश्रयू३: ।

१ ३र २ २ ५ २ ३ ५
हो२३४५ई ॥(२) आना:सो२३४मा । संयाता२३४म्पी ।

१२र १ २ १ २१ ३ ५ २ २
प्यूषीमिषा३म् । होयि । इन्दोपा२३४वा । स्वपावा२३

५ १ २र १ २ १ ३र २ ३ ५
४मा । नाऊर्म्मिणा३ । हायि । यानोदो२३४हा ।

२र ५ १ २१ २ १ ३ २ ३
तेन्नोरा२३४दान् । आसश्रूषा३यि । होयि । सुमादा

५ २ ५ ५ १ २र १ २ १
२३४जा । वन्माधू२३४मात् । सुवीरिया३म् । हो२३

४५ई । डा(३) ॥ ५ ॥ [४]

२र २ १ २र १र
॥ वाराहम्† ॥ हाउहाउ । ऊप् । प्रोअयासायित् ।

२ १ २ ३ ४ ५ २ १र २१
इन्दुरि । द्रस्यनिष्कृताम् । सखासख्यू: । नप्रमि ।

२र ३ ४ ५ २ १ २ १ २ ३ ४ ५
नातिसङ्गिराम् । मर्य्यइवा । युवति । भि:समर्षता

२र १ २र १ २र ३ २ ४
यि । सोम:कला । शेष्वत । या । मना३पा५या ६ ५

* ऊ० गा० १७प्र० १ख० ५सा० ।

† "जगतीवाराहम्"—इति ख० पु०-पाठ: ।

प्रवृद्ध "त्वा अनु" त्वामनुप्रति "सिन्धवः" स्यन्दमानाः "मही:" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १ २   १ २ ३ १ २ ३ २
समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः।

१ २ ३ १ २   ३ २
सोमःपवित्रे अस्मयुः ॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्माद्रसाइति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१ २   ३ २ ३ १ २ ३ २   ३ १र   १र २ २
अचिक्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः।

१र   २र
सꣳसूर्य्येणदिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योततइत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* छ० आ० ६, १, २, १ ( २ भा० ५५ पृ० )=ऋ० वे० ९, ७, १८, ५।

† 'अस्मासु भक्तिमित्युः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

२ १र   २ १   २र ३ ४ ५   २ १
६ ॥(१) प्रवोधियो । मन्द्रयु । वोविपन्युवाः । पनस्यु
२ १   २र ३ ४ ५   २ १ र   २ १
वाः । संवर । णेषुवक्रमूः । हरिक्रीडा । तमभ्य ।
२र ३ ४ ५   २ १र   १ १   १र   ३ २
नूषतस्तुभाः । अभिधेना । वःपय । सेत् । अभ्याइयि
४   २र १ र   २ १   १ ३ ४र
आ५यू६५६ः ॥(२) आ नःसोमा । संयतम् । पिप्युषी
५   २ १र   २ १   २र ३ ४र ५   २र
मिषाम् । इन्दोपवा । स्वपत्र । मानऊर्म्मिणा । या
१र र   २र १   २ ३ ४ ५   २र र
नोदोहा । तेत्रिर । हवनसख्युषायि । हाउहाउ ।
१   २ १ र   २ १   २   ३ २ ४
ऊप् । सुमद्वाजा । वन्मधु । मत् । सुवाइरा५या६५
६म्(३) ॥ १५ * ॥ [५]

२र १   २र र   ४ २
॥ अपामीवम् ॥ प्रोआ । यासीदिन्दुरिन्द्राइस्याइनि
२ ५   २ १   २   ४ २ ३ ५   २
ष्कृतम् । सखा । सख्युर्न्नप्रमिनाइतीइसङ्गिरम् । म
१   २   ४ २ ३ ५   २र १   २
र्य्याः । इवयुवतिभाइयिःमाइमर्षति । सोमाः । कल
र   ३ २ ४   २ १   २ र
शेभ्रनया । मनाइपा५या६५६ ॥(१) प्रको । धियोमन्द्र

* ऊ० गा० १३प्र० २ख० १५सा० ।

अथ सप्तमी।

२ ३१२ ३१२ ३१२
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
१ २ १२३१२
याभिर्मदायशुम्भसे॥ ७* ॥

हे "इन्द्रो!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७ ॥

अथ अष्टमी।

१२ १ २३१२ ३१२
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२३१२ ३२
तवप्रशस्तयेमहे॥ ८‡ ॥

"लोककृत्नुं" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते—"तव" "महे" महते "प्रशस्तये" प्रशंसनाय ॥ ८ ॥

---

* ऋ० वे० ६, ७, १९, १।

† 'शुम्भसे शोध्यसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, २।

¶ 'घृष्वये—घर्षनार्थम्'—इति वि०।

४ १२ ५ ११ २ ४ २२ ५
युवोइवाइयिपन्युवः। पना। स्युवःसंवरणाइयिषूइवक्रतुः।
११ २र ४ २२ ५ ११ २र
हरायिम्। क्रीडन्तमभ्यनूइषाइतस्तुभः। अभायि। धे
२ १ २ ४ २र १ २र
नवःपयसेत्। अशाइयिश्राऽयूइऽइः॥(२) आनाः। सो
४ २र २ ५ ११ २
मसंयतम्याइयिप्यूइषीमिषम् इन्दो। पवस्वपवमाइना
२र २ ५र २र१ २र र ४ २२ ५
इऊर्म्मिणा। यानो। दोहते। त्रिरस्याइनाइसश्चुषी।
२१ २र ३२ ४
त्तुमात्। वाजवन्मधुमत्। सुवाइ यिरा ५ या ६ ५
६ म्(३)॥१८*॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र ३२३१ २३१२
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
१२२३ २ ३१२३ १ २३१२ ३१र २र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टन्धृष्णुमोजसा॥१‡॥

---

* ऊ० गा० २२प्र० २ख० १८सा०।

† 'उक्ती माध्यन्दिनीः पवमानः। बृहत्पृष्ठं वामदेव्यं मैत्रावरुणं साम अभिनिधनं काण्वं ब्रह्मसाम वैखानसमच्छावाकसाम'—इति वि०।

‡ उ० आ० ३, २, १, १ (१आ० ५०२पृ०)=ऋ० वे० ६, ५, ८, ३।

अथ नवमी।

३ १ २ ३ १ २ १ १ २ १ २ ३ १
गोषाइन्दोनृषाअस्यश्वसावाजसाउत।
२ २ ३ १ २ ३ १
आत्मायज्ञस्यपूर्व्यः॥ ९*॥

हे "इन्दो" क्रियमान-सोम! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [ सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् ]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपिच "वाजसा" अन्नानां दाता चासि॥ ९॥

अथ दशमी।

३ १ २ ३ १२ २र ३ १ २
अस्मभ्यमिन्दविन्द्रयम्मधोःपवस्वधारया।
२ १ २ ३ १ २
पर्ज्जन्योवृष्टिमाऽइव॥ १०†॥ ३

हे "इन्दो" सोम! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमांइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" क्षर॥ १०॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः॥ १॥ ३

---

* ऋ० वे० ६, ७, १९, ५।

† ऋ० वे० ६, ७, १९, ४।

"तं" जनम् अन्यो मर्षको जनः "कर्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार। कीदृश-मिन्द्रम्? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्ट" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम्॥

"धृष्णुमोजसा"—"धृष्ण्वोजसम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २  ३ १र २र  ३ १र २र ३ १  २ ३ १ २
अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः।

२ ३ २ ३ १ २  ३ २ ३ १ २
सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः॥ २ *॥८

"अषाढम्" असोढम् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिभ्यः "उरुज्रयः" बहु-वेगाः "धेनवः" हविरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन्। न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "क्षामीः" पृथिव्यश्च ¶ समनोनवुः, तत्रत्याः सर्व्वे

* ऋ० वे० ६, ५, ८, ४।

† 'सासहिं—साधन-स्वभावम्'—इति वि०।

‡ 'धेनवः—गावः, आपः आदित्यरश्मयो वा'—इति वि०।

¶ 'क्षामीः—द्युलोकात् क्षेपणसमर्थाः आदित्य-रश्मयः'—इति वि०।

अथ द्वितीय-खण्डे —

सनाचेति-दशर्चे प्रथमे सूक्ते, प्रथमा।

१ २   ३ १ २ ३ १ २   ३१ ३ १ २

सनाचसोमजेषिचपवमानमहिश्रवः।

१ २ ३ १ २

अथानोवस्यसस्कृधि॥ १*॥

हे "महिश्रवः" महदन्न! "पवमान" सोम! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय। "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः॥ १॥

अथ द्वितीया।

२ ३ २ ३ २३ १   १ २   ३ १ २

सनाज्योतिःसनास्वा३ऽ२ऽर्विश्वाचसोमसौभगा।

१ २ ३ २ १

अथानोवस्यसस्कृधि॥ २¶॥

हे सोम! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ। अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि। "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत्॥ २॥

---

* ऋ० वे० ९, ७, २२, १।

† 'सना-शब्दः सदावाची। सदा जेषि च शत्रून्'—इति वि०। सायण-मते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः। विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)"—इति दीर्घः। मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले त्वयथायथं ह्रस्वान्त-प्रतीकमेव गृह्यते; इयमेव शैलिरस्य व्याख्यातुः सर्वत्रेति बोध्यम्।

‡ 'वस्यसः—वसनीयः'—इति वि०।

¶ ऋ० वे० ९, ७, २२, २।

प्राणिनो नमन्त इत्यर्थः "त्रिवृतो लोकाः"—इति श्रुतेः बहु-वचनम् ॥

"चामोः"—"चामः"—इति पाठौ ॥ २ ॥ ८

५ २ ४ ५ ४र ५ २ १ २र
॥ वैखानसम् ॥ नकिष्टा३ङ्कर्मणानशात्। यश्चकार।

१ २ ३र २ १ २ ३र १ १ २ १ ३
रा। सदावृधार३म्। सदावृधाम्। इन्द्रान्नया। उप

३ २ १ १ १ २ ३ २ १ २
विश्वग्। तमा२भ्वैसार३म्। तमृभ्वसाम्। अधार्ष्ट

१ २ ३र २ १ २ ३र २ ५ २
न्धा। षणुमाजसार३। षणमोजसा३४३ ॥(१) अधृष्टा३

४ ५ ४र ५ १ १ २ १ २ ३र २ १ २ ३र
न्धृष्णुमोजसा। अधार्ष्टन्धा। षणुमोजसार३। षणुमो

२ १ २ १ २ ३ २ २ ७ १
जसा। अषाढम्। अप्रृतना। सुसा२सह्वार३यिम्।

२ ३र २ १ २ १ २ ३ २ १ १ ३
सुसासह्वीम्। यस्मायिन्महायिः। उरुज्रया२३ः। उरु

२ ५ २ ४ र ५ ४ ५ २ १ २
ज्रया३४३ः ॥(२) यस्मिन्मा३हीरुरुज्रयाः। यस्मायिन्म

१ २ ३ २ १ १३ २ १ २ १
हायिः। उरुजया२३ः। उरुज्रयाः। सन्धायिनवो।

१र २ १र १ ७ १ १ २र २ २ १ २र १
जायमाने। अनो२नवू२३ः। अनोनवूः। द्यावाक्षामा

अथ तृतीया।

१ २ १ २३ १उ २ १ १ २ १ १
सनादक्षमुतक्रतुमपसोममृधोजहि।
१ २ ३ १ १
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रंश्च "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१ ३ १ १ २ १ २
पवीतारःपुनीतनसोममिन्द्रायपातवे।
१ २ ३ १ १
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, १९, ३।

‡ ऋ० वे० ६, ७, २२, ४।

२ ३र १ १    २ ३र २    १
यिः। आनोनवू२३ः। अनोनवू३४३ः। ओ२३४५ई।
डा(३) ॥ ८ * ॥ [१] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

अथ पञ्चम खण्डे‡, प्रथम तृचे—

प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।
२ ३ २ ३ १र २र ३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः! "आ निषीदत" स्तोतुमुपविशत। अत्र "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत। ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्मिश्रणैश्च "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत् ॥ १ ॥

---

* उ० गा० ४प्र० १अ० ६सा०।

† 'उक्तानि सूक्तानि'—इति वि०।

‡ 'इदानीमाभव: पवमानः'—इति वि०।

¶ ऋ० सं० ६, २, २, २ (२भा० २०६पृ०) = ऋ० वे० ७, ५, ७, १।

अथ पञ्चमी।

१२ १२३१ २ ३१ २३२ ३२ १ २
त्वꣳसूर्येनआभजतवक्रत्वातवोतिभिः।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ५* ॥

हे सोम ! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्तृकाभीरक्षाभिश्च "नः" अस्मान् "सूर्ये" "आ भज" प्रापय। सिद्धमन्यत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १ २
तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्य्यम्।
१२ ३१
अथानोवस्यसस्कृधि ॥ ६† ॥

हे सोम ! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः। सिद्धमन्यत् ॥ ६ ॥

अथ सप्तमी।

१क २र ३१ २ ३१२ ३ १
अभ्यर्षस्वायुधसोमद्विबर्हसꣳरयिम्।
१ २ ३ १ २
अथानोवस्यसस्कृधिः ॥ ७ ॥

हे "स्वायुध" शोभनायुध सोम ! त्वं "द्विबर्हसं" द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन् अभिगमय। सिद्धमन्यत् ॥ ७ ॥

* ऋ० वे० ९, ४, २२, ५।
† ऋ० वे० ९, ४, २३, १।
‡ ऋ० वे० ९, ४, २३, २।

अथ द्वितीया।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
समीवत्सन्नमातृभिःसृजतागयसाधनम्।
३ २ १ २ ३ १र २र
देवाव्यां ३ म्मदमभिप्रद्विशवसम्॥ २ *॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव? "वत्सन्न" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्धन-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत॥ २॥

अथ तृतीया।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पुनानादक्षसाधनंयथाशर्द्धायवीतये।
१ २ ३ २ ३ १ २ ३ १ २
यथामित्रायवरुणायशन्तमम्॥ ३ ¶॥ ९

---

* ऋ० वे० ७, ५, ७, २।

† "गयः"—इति निघण्टौ गृहनामसूक्तं पदम् (३, ४)। विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं निमग्नं सोमम्'—इति।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैषा व्याख्या सामवेदीयपाठस्तु "ई"—इति

¶ ऋ० वे० ७, ५, ७, ३।

अथाष्टमी।

२ २ १ २ ३ १ २ ३ १ २ ३ २
अभ्या३ऽर्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ८* ॥

हे सोम ! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत् ॥ ८ ॥

अथ नवमी।

२ ३ १ २ ३ १ २ ३ १ २
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम ! त्वां "विधर्मणि" विविध-फलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत् ॥ ९ ॥

अथ दशमी।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ ३ १ २
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १०¶ ॥ ४

* ऋ० वे० ६, ७, २३, ३।

† 'सासहिःसाधनसभावः'—इति वि०।

‡ ऋ० वे० ६, ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

“दक्षसाधनं” बलस्य साधनं* धनानां वृद्धेर्वा साधकं सोमं “पुनीत” पवित्रेण पुनीत [पूञ् पवने (उ०) क्र्यादिः; तस्माल्लोटि “तप्तनप्तनथनाश्च (७, १, ४५)”—इति तस्य तनादेशः, पित्त्वादीत्वाभावः “शर्द्धाय” वेगार्थं† “वीतये” देवानां पानार्थं यथा भवति तथा “मित्राय” “वरुणाय” च “शन्तमम्” अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः॥

“शन्तमं” “शन्तमः”—इति पाठौ॥ ३॥ ९

॥ प्रवम्‡॥ हाऽ। वो३हा। वो३हा३। हा। ओ
२३४वा। हायि। साखायार३४आ। नीषीदा२३४ता।
पूनाना२३४या। प्रा२३४गा। या२३४ता। शायिशुन्ना
२३४या। शैः पारा२३४यिभू। षा२३४त। आ२३४यायि॥(१)
सामीबा२३४त्साम्। नामातृ२३३भायिः। साज्जाता२३
४गा। या२३४सा। धा२३४नाम्। दायिवीवा२३४
याम्। मादामा२३४भो। दा२३४यिशा॥(२) वा२३४

* ‘दक्षसाधनं—शीघ्र-कर्म-कर्त्तारम्’—इति वि०।

† ‘शर्द्धाय—बलाय’—इति वि०।

‡ “स्नवः”—इति ख० पु० पाठः।

हे "इन्दो!" यागेषु क्रियमाण सोम! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तम् "विश्वायुं" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर। गतमन्यत् ॥ १० ॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा† ।

१ २ २ १ १ २   २ १ १ २१र   १र

तरत्समन्दीधावतिधारासुतस्यान्धसः ।

१२२ २१ २

तरत्समन्दीधावति ॥ १‡ ॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः चरति। तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति। पुनरपि तदेवाहात्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶ ॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मन्दीयं स्तौति धावति गच्छत्यूर्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचास्तुतस्य (निरु०१३,६)"—इति ॥ २ ॥

* 'विश्वायुं—दीर्घायुष्येण सह आभर'—इति वि०।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, सप्रयोजनं तथाप्यत्र सङ्क्षेपेणोच्यते'—इति वि०।

‡ ऋ० आ० ६, १, २, ४ (२भा० ५८४०)=ऋ० वे० ७, १, १५, १।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति सोमस्य। सोमस्य धारा वर्द्धत्या सुतस्याभिषुतस्य अन्धसोऽन्नस्य सोम-लक्षणस्य'—इति वि०।

५ २ ३ ५ २ ३ ५ २
साम्। पूनाता२३४दा। स्वासाधा२३४नाम्। याथा
३ ५ ३ ५ ३ ५ २ २
दा२३४र्डा। या२३४वी। ता२३४यायि। यथामा२३४
५ २ १ ५ ३ ५ २ ५
यिचा। यावाह्व२३४णा। या२३४ग्र। ता२३४माम्।
२ २ २ २ ३ ५ २
हा। वो३हा। वो३हा३। हा। ओ२३४वा। हा
५र र २ १ २ १ २र १र२र २ ११
३४। औहोवा। ए३। अतिविश्वानिदुरितातरेमा२३
११
४५(३) ॥ १२ * ॥ [१]

१ र र १ १र १
॥ सुज्ञानम् ॥ सखाय आ । निषीदता। पुनाना
२ १ २ १ र १
या२। प्रगायता। शिशुन्नाया२। यौ:प। रा२यि
३ ५र र १ २ २ र
भू२३४औहोवा। षतश्रियए३ ॥(२) समीवत्साम्। न
र १ २ १ र १ २र र १
मातृभायि। स्वजतागा२। यसाधनाम्। देवावाया२
१ ३ ५र र १ २
म्। मदम्। आ२भा२३४औहोवा। द्विशवसमे३ ॥(१)
१र र र १ १र १ र १
पुनाताद्ग। स्वसाधनाम्। यथाशार्डा२। यवीतया

* ऊ० गा० ४प्र० १ख० १२गा० ।

*अथ द्वितीया।

२ १ १ ३ १ २ ३ १ १ २ ३ १ २
उस्रावेदवसूनाम्मर्त्तस्यदेव्यवसः।
२ ३ २ ३ १ २
तरत्समन्दीधावति॥ २*॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत्॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ ३ १ २
ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे।
२ ३ २ ३ १ २
तरत्समन्दीधावति॥ ३‡॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरन्येतरयोग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावत्सार एतयोर्धनानि

* ऋ० वे० ७, १, १५, १।

† 'उस्रा दीप्ता वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वं आ धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, ३।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान स्वभावयोः सोम-धारयोरपि दीपकक्रमेण सह सम्बध्यमः पापञ्च संहारयोः'—इति वि०।

२ र १ १ २ ५र र १
यि। यथामायित्वा२। यव। हरणा२३४औहोवा। य

२ १ १११२
शन्तममे३उपा२३४५(३) ॥ १८* ॥ [२]

३ १ ३ १ ५र
॥ दैवोदासम् ॥ सखा३१। यश्रा३१२३४। निषी।

२ २ २ २ २र २ ५र २ २
दा३ता। पुना३१। नाया३१२३४। प्रगा। या३ता।

२ १ २ २ र २ २ २ २ २
भिभू३१म्। नया३१२३४। ज्ञौ:प। रा३यिभू। षता

२ २ १ ५ २ १ २ २
३१। श्रिया३। ओ२३४वा ॥(१) समी३१। वत्सा३१२

५र २ २ २ २ ५र
४म्। नमा। तृ३३भायि:। हजा३१२३४। यसा।

२ २ ३र २ २ २ ५ २
सा३नाम्। देवा३१। विया३१२३४म्। मदम्। आ

२ २ २ २ २ १ ५
३भायि। हिशा ३ १। वसा३म्। ओ२३४वा ॥(१)

२ २ ३र २ ५र २ २ २ २
पुना३१। तादा३१२३४। त्वसा। धा३नाम्। यथा

२ २ ५र २ १ २ २ २ २
३१मर्ता३१२३४। यवी। ता३याथि। यथा३। मिचा

* ज० गा० ७प्र० १ख० १८गा०।

प्रतिजग्राह एवं तरन्त-पुरुमीळ्हौ प्रतिजगृहतुः। तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीळ्हौ वैदश्वी ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिमृशाते तावकामयेतामसातमाविवेद सातंस्यादात्त मिवैव न प्रतिगृह्णीत मिति भावे तच्चतुर्ऋचमपश्यतां स्तरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृह्णीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

अथ चतुर्थी।

१र २र ३ १ २ १ २ १ २ १ २ ३ १ २
आययोस्त्रिꣳशतन्तनासहस्राणिचदद्महे।
२ १ २ ३ १ २
तरत्समन्दीधावति ॥ ४* ॥ ५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृह्णीतं तत् सर्वम् अप्रतिगृहीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत् ॥४॥ ५

एतेसोमाइति द्वचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३१र ३र १ २र ३र ३ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन्।
३ १ २ ३ १ २
वर्धन्तोअस्यवीर्यम् ॥ १† ॥

* ऋ० वे० ७, १, १४, ४।

† ऋ० वे० ७, १, १८, १।

३१२३४। यव। हू३णा। यशा३१। तमा३म्। ओ २३४वा। ऊ२३४पा(३)॥ १८ *॥ [३]

॥ पौष्कलम्॥ सखाया३आनि। षीदा२ ३ ४ता। पुनानाया। प्रागाया२३४ता। शिशून्नया। ज्ञैःपा२ रा२३४५यिभू६५६। षतश्रिये२३४५॥(१) समीवा३त्सन्न। मातृ२३४भायिः। हूज्मतागा। यासाधा २ ३ ४नाम्। देवावियाम्। मदा२मा२३४५भा६५६यि। द्विशवसा२ ३४५म्॥(२) पुनाता३दच्च। साधा२३४नाम्। यथा शर्द्धी। पावीता२३४यायि। यथामित्रा। यवा२हू२३ ४५णा६५६। यशन्तमा२३४५म्(३)॥ १८ †॥ [४]

॥ शौक्तम्॥ सखा। यआ३ओ२३४वा। निषायि।

* ऊ० गा० ७प्र०१ख० १९सा०।

† ऊ० गा० ९प्र० १ख० १८सा०।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सन्तः "मृणानाः" स्तूयमानाः "महे" महते "श्रवसे" अस्माकं बलाय धारया "असृक्षत" गच्छन्ति ॥१॥

अथ द्वितीया ।

२ १र २र ३ १ २ ३ १ ३ २ १ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि ।
३ १ २ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम ! "वीतये" देवानां भक्षणाय "नृम्णा" नृम्णानि धनवत् प्रियतराणि† "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि । हे सोम ! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशा-पवित्रादधः क्षर ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ २ ३ १ २　　१ १ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः ।
३ १ २ १ २
गृणानोजमदग्निना ॥ ३¶ ॥ ६

* ऋ० वे० ७, १, २८, ३ ।

† 'नृम्णा बलेन'—इति वि० ।

‡ 'सनत् सदा'—इति वि० ।

¶ ऋ० वे० ७, १, २८, ४ ।

२ ३ ५ २ र २र ३ १ १ १ १ १
दांताओ२३४वा । पुनानायप्रगा२यता२३४५ । शायि
२ ३ ५ १ र ३ १ १ १ १ १ २ ३
यिशाओ२३४वा । नयज्ञैःपरिभू२३४५ । षाताओ२३४
५ २ ५ र ३ १ ३ ५ २ १
वा । श्रिये१ ॥(१) समौ । वत्साओ२३४वा । नमा ।
२ ३ ५ २ १र २ १र ३ १ १ १ १ १ २
तृभाओ२३४वा । हृजतागयसाधना२३४५म् । दायिवा
३ ५ १ ३ २ २ ३ ५
ओ२३४वा । वियम्मदमभा१यि । दायिशाओ२३४वा ।
२ ५ र ३र २ ३ ५ २ १ २
वसा१म् ॥(२) पुना । तादाओ२३४वा । त्तमा । धानां ।
३ ५ १ २र १ र २ र १ ३ १ १ १ १ १ २ ३
ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । याथांओ२३
५ २ १र २ १ ३ १ १ १ १ १ २ ३ ५ २
४वा । मित्रायवरुणा२३४५ । याशाओ२३४वा । तमा
१म्(३) ॥ १५ ॥ [५] ९

• अथ प्रवाजीति तृचात्मकं द्वेपदं द्वितीयं सूक्तं—

तत्र प्रथमा ।

२ ३क २र ३ १ २ ३ २ ३ २ ३ २३ ३ १ २
प्रवाज्यक्ताःसहस्रधारस्तिरःपवित्रंविवारमव्यम् ॥ १ † ॥

---

* ऊ० गा० १४प्र० २अ० १५मा० ।

† ऋ० वे० ७, ५, ०१,५ ।

"उत" अपिच हे सोम! "जमदग्निना" जमदग्नि-नाम्ना हविणा मया "स्तुवानः" स्तूयमानः त्वं "नः" अस्माकं मोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* [वी]णि "इषः" अन्नानि देहीत्यर्थः॥ ३ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-तृचे,¶ प्रथमा।

१ २उ  ३ १ २  ३ १ २  ३
इमꣳस्तोममर्हतेजातवेदसे

१ २  ३ १ २  ३ १ २
रथमिवसम्महेमामनीषया।

३ २उ  ३ १ २  ३ १र
भद्राहिनःप्रमतिरस्यसꣳस

२र३ १र  २र  ३१र २र
द्यग्नेसख्येमारिषामावयन्तव ॥ १§ ॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, [जा]त-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निश्चितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि॰।

† 'उक्थं वर्द्धिष्णवमाननम्'—इति वि॰।

‡ 'वयश्चिं प्रस्तोमः षडमवः'—इति वि॰।

¶ 'आग्नेयमाज्यम्'—इति वि॰।

§ ऋ॰ आ॰ १, ९, २, ४ (१अ ११२४॰)=ऋ॰ वे॰ १, ६, १०, १।

“वाजी” बलवान् वेगवान् वा “सहस्रधारः” बहुधारायुक्तः सोमः “अव्यम्” अविमयं “वारं” वालं पवित्रं “तिरः” व्यवधायकं कुर्व्वन् “प्राक्षाः” विविधं प्रक्षरति [क्षरतेर्लुङि रूपम्] ॥

“प्रवाजी”-“प्रसुवानः”—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २क २र ३ १ २ ३ १ २ ३ १र २र ३ १

सवाज्यक्षाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥२*॥

“सः” सोमः “अक्षाः” क्षरति । कीदृशः ? “सहस्ररेतः” बहु-रेतस्कः “बहूदकः” “अद्भिः” वसतीवरीभिः “मृजानः” मृज्यमानः “गोभिः” गोविकारैः क्षीरादिभिः “श्रीणानः” श्रियमाणः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १र २र ३ १र २र ३ २

प्रसोमयाहीन्द्रस्यकुक्षानृभिर्येमाणोअद्रिभिःसुतः ॥३†॥१०

हे “सोम !” “नृभिः” ऋत्विग्भिः “येमानः” नियम्यमानः‡ “अद्रिभिः” ग्रावभिः “सुतः” अभिषुतः “इन्द्रस्य” “कुक्षा” [सप्तम्या डादेशः ( ३, ४, ३८ )] कुक्षौ उदरभूते कलशे वा “प्रयाहि” प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र णत्वम्] ॥ ३ ॥ १०

---

* ऋ० वे० ७, ५, २१, ६ ।

† ऋ० वे० ७, ५, २१, ७ ।

‡ 'येमानः—स्तूयमानः'—इति वि० ।

बुद्धा "इमम्" एतत्स्वरूपं स्तोमं रथमिव यथा तक्षा रथं संस्करोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः। तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्धा स्तुम इत्यर्थः। हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रचेत्यर्थः। [ "अर्हते"—अर्ह पूजायाम् (भ्वा० प०) "अर्हः प्रशंसायामिति (३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् (३,१,४), शतुश्चादुपदेशात्सार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् (भ्वा० प०)। रिषाम—रिष हिंसायां (भ्वा०प०) व्यत्ययेन शः(३,१, ८५)। तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीꣳषिते

२ १ २ ३ १ २ ३ २
चितयन्तःपर्वणापर्वणावयम्।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराꣳसाधयाधियो

२र ३ १र २र ३ १र २र
ग्नेसख्येमारिषामावयन्तव॥ २*॥

हे "अग्ने!" त्वयागार्थम् "इध्मम्" इन्धन-साधनम् एकविंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, ३०, ४।

॥ सोहविषम् ॥ प्रवाजियन्वाः । सहस्रधारास्ता१यि
रा२३४ः । हायि । पवित्राम् । विवारा२३४५हायि ।
आ२३४व्योई हायि ॥(१) सवाजियश्वाः । सहस्ररेताश्र
द्भा२३४यिः । हायि । मृजानाः । गोभायिश्रा२३४यि
हायि । णा२३४नोई हायि ॥(२) प्रसोमयाद्यो । इन्द्र
स्यकुक्षानृभा२३४यिः । हायि । येमानाः । अद्रिभार
३४ । यिर्हायि । सू२३४तोई हायि(३) ॥ १५ * ॥ [१]

॥ जराबोधीयम् ॥ प्रवाजियोवा । न्वाः । सहार
३स्रा । धारस्तायिराः । पवाथित्रा१वा२३यिवा । रम् ।
अव्यो३४५ई । डा । सवाजियोवा । श्वाः । सहार
३स्रा । रेताश्रद्भायिः । मृजाना१गो२३भायिः । श्री ।
णानो३४५ई । डा । प्रसोमयोवा । हायि । इन्द्रास्या

* ऊ० ग्रा० ४प्र० १ख० १५सा० ।

तदनु "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपक्ष-माहृताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १ १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययाद्दाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ २ ३
शकेमत्वासमिधꣳसाधयाधिय

२ ३ २ ३ १ २ ३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १र २र ३ २ १र
त्वमादित्याꣳआवहतान्ह्यु३ऽश्म

२र ३ १र २र ३ १र २र
स्यग्नेसख्येमारिषामावयन्तव॥ ३†॥ ७

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयान् समर्थः'—इति वि०।

† ऋ० वे० १, ६, २०, ३।

२ र १ र २ ४ऽ ५
२३कू । स्वानुभायिः । येमानो१आ२३द्रायि । भिः ।
३ २
सुतो३४५ई । डा(३) ॥ १ * ॥ [२] १०

अथ येसोमा इति तृचात्मकं तृतीयं सूक्तम्, †

तत्र प्रथमा ।

१र २र ३ २ ३१ २ ३ १ २ ३ २
येसोमासःपरावतियेअर्वावतिसुन्विरे ।
२ ३ १ २ ३ १ २
येवादःशर्य्यणावति ॥ १ ‡ ॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं कर्वत्र सोमाभिषवोऽस्तीत्याह—"ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे¶ देशे "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति"‖ [कुरुक्षेत्रस्य जघनार्द्धे शर्य्यणावत्सञ्ज्ञकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति] "अदः" अस्मिन् सरसि सुरमा ये सोमा इन्द्रायाभिषूयन्ते । ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः ॥ १ ॥

---

* ऊ० गा० २३प्र० ३अ० १सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति ।

‡ ऋ० वे० ७, २, ५, २ ।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् (३, २६) ।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु अष्टमं पदम् (२, १६) ।

‖ 'शर्य्यणावति—भूमौ'—इति वि० ।

हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ् (३,१,८६), अदुपदेशात्तसार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७, १, ४६,), अदादित्वाच्छपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६)॥ ३॥ ७

२१ १२ १ २र २ १र २१
॥ समन्तम् ॥ इमꣳस्तोममर्हतेजातवेदसायि। रथ

२र २ र १ १ १
मिवसम्महेमामनीषया। भद्राह्यार३यिनाः। प्रामतिर

१ १ र२र १ २ १ र २र १र २१
स्यसꣳस। द्यग्नायि॥(१) भरामेध्मङ्कृणवामाहवीꣳषिता

---

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२, १)।

अथ द्वितीया !

१ २ ३ २ ३१ २ ३१२ २२क १ २२

यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम्।

१ २ १ २ ३ १ २

येवाजनेषुपञ्चसु॥ २ *॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः॥ २॥

---

* ऋ० वे० ७, १, ५, ३।

† 'आर्जीकेषु—ऋजुषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् (३, ४,)।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वार ऋत्विजः'—इति वि०।

र र र २
यि । चितयन्तःपर्वणापर्वणावयाम् । जीवातार२३वायि ।
१ १र र र १ २ १र २र १
प्रातरा॑साधयाधि । योग्नायि ॥(२) अकेमत्वासमिधं॑
२र १ र ३ १ १र र र र
साधयाधियाः । त्वेदेवाहविरदन्त्याङ्गताम् । तुवमा२३
२ १ र २ र १ २ १र
दी । त्या॑आवहतान्ह्युम । स्यग्नायिसाख्यां । औ
२ ३र २ १र २ १ २ २
होऽ३४वाहायि । मा । रायिषार२३मा३ । होवा३हायि ।
१ २ १
वयन्तार२३वा३४३ । ओ२३४५ई । डा(३) ॥ १५* ॥ ७

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
प्रतिवा॑सूरउदितेमित्रङ्गृणीषेवरुणम् ।
३ १ २ ३ १ २
अर्यमण॑रिशादसम् ॥ १ † ॥

हे मित्रावरुणौ ! "मित्र" त्वां "वरुणं" च "वां" युवां "रिशादसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

---

* ऊ० गा० १७ प्र० १ ख० १५ सा० ।

† ऋ० वे० ५, ५, ९, १ ।

अथ तृतीया ।

१ २ ३ २ ३२र ३१२ ३ २ ३ १ २
तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम् ।
३ २ ३ १ ३ १ २
स्वानादेवासइन्दवः ॥ ३ * ॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" [ "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते । आदित्याज्जायते वृष्टिः (म० १अ० )"—इति वृष्टि-कारणत्वात् ] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु । यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ ११

२र र १ २ १ र २ १
॥ जरावोधीयम् ॥ येसोमासोवा । पारावताथि ।
२र १ २ १ र २ ४
येआर्वा२३वा । तिसुन्वायिराथि । येवादा१ःशा२३र्य्यां ।
५र ३ २ २र र १ २ १ ११
णा । वतो३४५ई । डा ॥(१) यआज्जौकोवा । पृक्तात्वसू ।
२र १ २ १ र २ ४
येंमाध्या२३यिपा । स्तियानाम् । येवाजा१ना२३यिषू ।

---

* ऋ० वे० ७, १, ५, ४ ।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्ये देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
रायाहिरण्ययामतिरियमवृकायशवसे।
३ १ १ २र ३ १ २
इयंविप्रामेधसातये ॥ २ * ॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्याय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः ॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्रज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु ॥ २ ॥

अथ तृतीया।

१ २ ३१ २ ३ १ २ ३ २
तेस्यामदेववरुणतेमित्रसूरिभिःसह।
१ २क २र
इषꣳस्वश्चधीमहि ॥ ३ ‡ ॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

५ २ १ २ १ २ १ १ २ १ २ १ १ २ १ २ १
पां\ चसो ३४ ५ई । तेनोवृष्टोवा । दायिवस्पराथि ।
१ २ २ १ २ २ ४
पवान्तार३मा । सुवीरायाम् । स्वानादा१यिवार३सा: ।
५ २ २
ई । दवो३४५ई । डा(३) ॥ १६ * ॥ [१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

आतेवत्सइति त्वचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा ।

१ २ ३ १ २ २ २ ३ १ २ ३ १ २
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात् ।
२ ३ १ २ ३ २
अग्नेत्वाङ्कामयेगिरा ॥ १ † ॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमा-
च्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्"
आयमन्ति आगमयन्ति । केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १ख० १६सा० ।

† ऋ० आ० १, १, १, ८ (१भा० १०५४०)=यं० वे० १२, ११५=अ० वे०
५, ८, २६, १ ।

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वश्च" स्वर्गञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।

वसुस्पार्हन्तदाभर ॥ १ † ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया ।

यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।

वसुस्पार्हन्तदाभर ॥ २ ‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३, १, ८५) ] "दत्तस्य" दत्तं "भूरिः" बहु "यस्य" यत् धनम् [ सर्वत्र कर्म्मणि षष्ठी वेदि-

---

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† ऋ० आ० २, १, ४, १० ( १भा० ३११ पृ०)=ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

कामया अभिलषन्त्या "गिरा" स्तुत्या [ "कामये"—इत्यत्रापि शे आदेशः पूर्ववत् । यद्वा त्वां कामये अभिलषामि] ॥

"कामये"-"कामया"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३उ १२उ ३ १ २ १ २ १ १ २ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः ।

३ १ २
समत्सुत्वाहवामहे ॥ २ * ॥

हे अग्ने ! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि । ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे ॥

"दिशः"-"विदिशः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १२ ३२ ३ १ २
समत्स्वग्निमवसेवाजयन्तोहवामहे ।

१ २ ३ १ २
वाजेषुचित्रराधसम् ॥ ३ † ॥ १२

"समत्सु" समदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम् ? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम् ॥ ३ ॥१२

* ऋ० वे० ५, ७, १९, २ ।

† ऋ० वे० ५, ८, १९, ४ ।

तव्या ] "विश्वं" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३१र २र ३१२
यद्वीडाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम्।
१२ २ १र २र
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र !" त्वया च "वीडौ" दृढ़े परैः कम्पयितुमशक्ये "यत्"धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

३ १ २ २उ १ २ ३ २ ३ १ १२१ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्म्मसु।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

---

* "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति, स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु॰ नै॰ ६, १४।

† छ॰ आ॰ ३, १, २, ६ ( १भा॰ ४४॰ पृ॰ )=ऋ॰ वे॰ ६, ३, ४९, ९।

‡ ऋ॰ वे॰ ६, ३, १०, १।

५र र   १ र १   १ १र
॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् ।
१ २   १ २ ?   ४ ५ ५
चित्सधार२३स्थात् । अग्नायित्वा२ङ्का३ । मयोवा । गा
५   २ र   १ २   १ र
५यिरो६हायि ॥(१) पुरुत्राह्यो । सदृङ्ङसि । दिशो
२ र   १ २   १ २ २   ४ ५
विश्वाः । अनुप्रा२३भूः । समात्सू३त्वा३ । हवोवा ।
४ ५   २   १ २ र   १र २
मा५चो६हायि ॥(२) समत्सुवा । ग्निमवसे । वाजयन्तः
र   २   १र   २ २   ४ ५ ४
हवामा२३हायि । वाजायिषू३चा३यि । त्ररोवा । धा
५
५सो६हायि(३) ॥ १७* ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

३१ २३१   २३१   २ ३ १ २
त्वमिन्द्राभरओजोनृम्णंशतक्रतोविचर्षणे ।
२   ३ १ २   ३ १ २
आवीरम्पृतनासहम् ॥ १ † ॥

---

* ऊ० गा० ४प्र० १ख० १७सा० ।

† स० आ० ५, १, २, ७ ( १भा० ८२४पृ० ) = ऋ० वे० ४, २, १०, १ ।

हे "इन्द्राग्नी !" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च "सस्नी" संस्नातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम् ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २र
तोशासारथयावानावृत्रहणापराजिता।
१ २ ३ १ १
इन्द्राग्नीतस्यबोधतम् ॥ २ ‡ ॥

हे "इन्द्राग्नी!" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

अथ तृतीया।

३ १ २ ३१र २र३ १ २ ३१२
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ ३ § ॥ १०

---

* 'सस्नी—शोधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा— दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, २०, ३।

हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर। "वीरं" वीर्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-"आवतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र ३ १ २ ३ २ ३ १ २ ३ १ २

त्वꣳहिनःपितावसोत्वम्माताशतक्रतोबभूविथ ।

१ २ ३ १ २

अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्म्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २

त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत ।

१ २ ३ १ २

सनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १३

* ऋ० वे० ४, ६, १०, १ ।

† ऋ० वे० ४, ६, १०, ३ ।

हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिर" मदकरं "मधु" सोमात्मकम् अमृतम् "अचन्" अपूरयन्। सिद्धमन्यत्॥ ३ ॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य तृतीयः खण्डः* ॥ ३ ॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा।

१ २     ३ १ २ ३ १ २ ३   २
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।
३ २ ३ १   २ ३ १ २
अर्कस्ययोनिमासदम्॥ १ ¶॥

हे "इन्दो" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" चर॥ १॥

अथ द्वितीया।

२ २   १ २   ३   २ ३ १ २      ३ २
तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम्।
१ २     ३   १ २
सन्त्वामृजन्त्यायवः॥ २ §॥

---

* 'उक्तं प्रातःसवनम्'—इति वि०।

† 'इदानीं माध्यन्दिन' सवनमुच्यते'—इति वि०।

‡ 'इषोट्टधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि०।

¶ छ० आ० ५, २, ४, ६ (२भा० १९ पृ०) = ऋ० वे० ७, १, ४०, १।

§ ऋ० वे० ७, १; ४०, २।

[सहसा बलेन स्तोतृभिर्युक्तः कृतः सहस्कृतः] हे "सहस्कृत" इन्द्र! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —"शुष्मिन्" अतएव बलवन्! "पुरुहूत" पुरुभिर्बहुभिर्यजमानै राहुतेन्द्र! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उप स्तौमि। "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ॥ ३ ॥ १३

॥ औपगवाद्यम्॥ तुवन्ना३इन्द्रआभरा। ओजोनृम्णꣳशतक्रतोविचर्षणायि। आवौ२। हौ२। ऊवा२३यि। रा३४पा। जनासाहाम्॥(१) तुवꣳहा३यिन्नः पितावसाउ। त्वम्माताशतक्रतोबभूविथा। अथौ२। हौ२। ऊवा२३यि। ता३४यिसू। म्नमीमाहायि॥(२) तुवाꣳशू३ष्मिन्पुरुहूता। वाजयन्तमुपब्रुवेसहस्कृता। सनौ२। हौ२। ऊवा२३यि। रा३४स्वा। सुवीरायाम्। ऐ। हा२ए२३। हिया३४औहोवा। ए३। उपा३१२३४५(३)॥ १८ *॥ [१] १३

* ऊ० गा० ४प्र० १ख० १८गा०।

हे सोम! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति†। अपि च "त्वा" त्वाम" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ ३ ३ १ २ ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे।
१ २ ३ १ २
पवमानस्यमरुतः॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम! "पवमानस्य" चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र १
॥ इषोवृधीयम्॥ इन्द्रायेन्दाउ। मरुत्वतायि।
२ १ १ २ १ १ र
पवस्वामा२। धुमत्तमाः। अर्कस्यायो२। निमा।
१ ३ ५र र २ र र १
स्यारदा२३४औहोवा ॥(१) तन्त्वाविप्राः। वचोविदाः।

* विप्रा, वचोविदः—मेधाविनः, ऋत्विजः'—इति वि०।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि०।

‡ 'आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् (२, ३)।

¶ ऋ० वे० ७, १, ४०, ४।

§ 'रस' वीर्यम्'—इति वि०।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १ २ उ ३ १ २
यदिन्द्रचित्रमइहनास्तित्वादातमद्रिवः ।
२ ३ १ २ ३ १ २
राधस्तन्नोविदद्वसउभयाहस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"–"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१र २र ३ १ २ ३ १ २ ३ १र २र
यन्मन्यसेवरेण्यमिन्द्रद्युक्षन्तदाभर ।
३ १ ३ १ २ ३१र १र ३ १ २
विद्यामतस्यतेवयमकूपारस्यदावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* ऋ० आ० ४, २, १, ४ ( १भा० ७०४पृ० ) = ऋ० वे० ४, २, १०, १ ।

† ऋ० वे० ४, २, १०, २ ।

परिष्काण्वर्वा२। तिधर्णसायिम्। सन्त्वामाज्जौ२। ति
आ। या२वा२३४औहोवा॥(२) रसन्तेमायि। वो
अर्य्यमा। पिबन्तूवा२। वरुणःकवायि। पवमाना२।
स्यम। क्रतू२ता२३४औहोवा। दूषोवृधे१(३)॥१८*॥[१]

॥गायत्रीक्रौञ्चम्॥ इन्द्रायेन्दा१औहो। मा३रु
त्वा२३४तायि। पावस्वामा। धूऽ३म। ता२३४माः।
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२
३यिम। अ। वाहायि। सा२३४दाम्। एहियाइ
हा॥(१) तन्त्वाविप्रा१औहो। वा३। चो। वी२३४दाः।
पारिष्काण्वर्वा। ता३यिधा। णा२३४सायिम्। परिष्कृ
ण्वन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।
अ। वाहायि। या२३४वाः। एहियाइहा॥(२) रस

* क० गा० ३ प्र० १ अ० १९ सा०।

"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यान्नस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ १
यत्त इन्द्र दिद्युत्प्राध्यम्मनो अस्तिश्रुतम्बृहत् ।

१ २ ३ १ १ २ ३ १२ ३२ ३ १ २
तेन दृढाचिदद्रिव आवाजन्दर्षिसातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र ! "ते" तव "दिद्यु" "प्राध्यं" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र ! "दृढ़ाचित्" दृढ़मपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दिद्यु"-"दिरसु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ १ ४ ५
॥ वौङ्कम् ॥ यदिद्रचित्तमइ । हना३ । आस्ती ।

१२ २ २ १ १ १
त्वादातमद्रिवः । राधस्ता२३न्नाः । वौवौ२ । ददसा

२ १ १ २
उ । उभया२३हा । स्तायार३ । भा२३रा३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३ ।

न्तेमा१औहो । ओ३अर्या२३४मा । पायिबन्तुवा । रू३णः ।
का२३४वायि । पिबन्तुवरुणा३२ः । का२३४वायि । पव
मानस्या२३ । म । बाहायि । रु२३४ताः । एहियाइ
हा । होपुई । डा(३) ॥ २० * ॥ [२]

॥ वाजदावदावयम् ॥ इन्द्रायेन्दाउ । मरु२त्वा२३
४तायि । पवा२स्वा२३४मा । धुमत्ता२मा: । आ२३र्का ।
स्या२यो । निमो२३४वा । सा५दो६हायि ॥(१) तन्त्वा
विप्राः । वचो२वी२३४दाः । परा२यिष्का २ ३ ४ एर्वा ।
तिधर्णा२सायिम् । सा२३न्त्वा । मा२र्जा । तियो२३४
वां । या५वो६हायि ॥(२) रसन्तेमायि । ओआ२र्या
२३४मा । पिबा२न्तू२३४वा । रुणःका२वायि । पा२३वा ।
मा२ना । स्यमो२३४वा । रू५तो६हायि(३) ॥ २१ † ॥ [३]

* ऊ० गा० ३प्र० १अ० १०सा० ।

† ऊ० गा० ३प्र० १अ० ११सा० ।

यन्मन्यसेवरे। णियाइम्। आयिन्द्रा। द्युक्तदाभर। विद्यामा२३ता। स्यास्या२। तेवयाम्। अकूपा२३रा। स्यादा२३। वा२३ना३४३ः॥(२) यत्तेदित्सुप्रा। धिया३म्। मामाः। अस्तिश्रुतम्बृहत्। तेनदा२३र्ढा। चायिवा२यित्। अद्रिवाः। आवाजा२३दा। षायिसा२३। ता२३या३४३यि। ओ२३४५ई। डा(३)॥१८*॥[१]

॥वसिष्ठप्रियम्॥ यदिन्द्रा२३। चित्रमइह। नास्ती। त्वादा३तामद्रायिवो२। राधास्तन्नो३। विदा२द्वा२३४साउ। ऊभाओ२३४वा। यच्चाओ२३४वा। स्तियापुभरा॥(१) यन्मन्या२३। सेवरेणिम्। आयिन्द्रा। द्युत्ता३न्तादा१भारा२। विद्यामता३। स्यतार२यिवा२३

* ऊ० गा० ४प्र० १ख० १८सा०।

२ ३र ४ ५ र र
॥ अश्वसूक्तम् ॥ आ३औहोवाहायि। इन्द्रायेन्दा
२ १ र २र र ३र २ २ १ ३
उ। मरु। त्वते। ऐहीयेहो१। पावस्वमधुमात्तमः।
र र१र २ १ १र
ऐहीयैहो१। आ२यि। आर्क्का२स्यायो२। निमा।
३ ५र र २ ३र ४ ५ र
सा२दा२३४औहोवा ॥(१) आ३औहोवाहायि। तन्त्वा
२ १ २र र ३र २ २
विप्राः। वचो। विदः। ऐहीयैहो१। पारिष्कृण्वन्ति
१ २र र२ र १ १
धार्णसिम्। ऐहीयैहो१। आ२यि। सान्वा२मार्जा
१र ३ ५र र २ ३र ४
२। तिआ। या२वा२३४औहोवा ॥(२) आ३औहोवा
५ र २ र १ र २र र ३र २
हायि। रसन्तेमायि। त्तोआ। यमा। ऐहीयहो१।
१ २ १ र ३र र ३र २ १
पायिबन्तुवरुणाःकवे। ऐहीयैहो१। आ२यि। पावा
१ १ ३ ५र र २ १ र२
२माना२। स्यम। रु२ता२३४औहोवा। प्राक्रआङ
७ १ १ १ १
ता२३४५ः(३) ॥ ४ * ॥ [४]

५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ इन्द्रायाइयिन्दोमरुत्वतायि। पवा

* ऊ० गा० ८प्र० १ख० ४सा० ।

५ १ २ ३ ५ १ २ ३ ५ ४
४याम्। आकाओ२३४वा। पाराओ२३४वा। स्पदा

२ १र ४ ५र ४ ५
५नाः ॥(२) यत्तेदी२३। सुप्रराधियम्। मानाः।

२ १ ७ २ १ २ १ २
अस्तौ३श्रूतम्बृद्धा२त्। तेनाहढा३। चिदा२द्रा२३४यि

५ १ २ ३ ५ १ २ ३ ५ ४
वाः। आवाओ२३४वा। जान्दाओ२३४वा। षिसा५त

यायि। ह्वो५ई। डा(३)॥ १८ *॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ऊ० गा० २३प्र० २ख० १८सा०।

† 'समाप्तश्चैतत्सप्तममत्रः'—इति वि०।

‡ 'चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि० मूलपुस्तकादिसम्मतश्चैतिपाठः॥

२ १ १ १ २ १
खा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमार२३स

२ १र २ १ १ १
दाउ। वा३। स्तौषे३४५(१) ॥ ४ * ॥ [५]

१ १ र र १
॥ दार्ढच्युतम् ॥ इन्द्रा। इहा। येन्दोमरु२त्वता

२ १ १
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ

२ १ र १ २
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१ ॥(१)

२ १ र १ २ १
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।

१ २ १
इहा। क्षाण्वन्तिधा२र्णसायिम्। इहा। सन्त्वा। इ

१ १ २ १
हा। मृजन्तिआ२यवाः। इहा१ ॥(२) रसाम्। इ

र र १ २ १
हा। तेमित्रोआ२र्य्यमा। इहा। पिबा। इहा। तु

१ २ १ र
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा

१ २
२रुताः। इहा१(३) ॥ १३ † ॥ [६]

---

* ऋ० मा० १०प्र० २ख० ४सा०।

† ऋ० मा० १६प्र० १ख० १३सा०।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

## ॥ अथ नवमोऽध्याय आरभ्यते[*] ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे[†] तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
शिशुञ्जज्ञानꣳहर्यतम्मृजन्ति
३ २ ३ १२ ३ १ २ ३ १ ०
शुम्भन्तिविप्रम्मरुतोगणेन ।
३ २ ३ १२ २ ३ १२
कविर्गीर्भिष्काव्येन[‡]कविःसंसत्
१२ ३ २ ३ १२ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ [¶] ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्[§] [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्[‖] अतएव

---

* 'इदानीमष्टमचत्वारिंश मुच्यते'—इति वि० ।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि० ।

‡ "गीर्भिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु० ।

¶ ऋ० वे० ७, ४, ९, २ ।

§ 'शिशुं—शंसनीयम्'—इति वि० ।

‖ 'जज्ञानं—जायमानम्'—इति वि० ।

२ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि । मा

३ ५ २ १ ५ २ १ २
रुत्वा२३४तायि । पवाख्वा२३४हायि । मधुमत्ता ३ ४ ।

३र ४र ५ १ ३ ५ २ ३ ५ १ १ २
आहोवा । इहा२३४हायि । उऊवा२३४माः । अकस्य ।

१ ७र २ ३र ४र ५ १ ३ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो

५र ५ २ र र र १
३१२३४ । दाम् । एहियाइहा ॥(१) तन्त्वाविप्राऔहो

२ ३ ५ २१ ५ १
हायि । वाचोवो२३४दाः । परायिष्का२३४हा । एवन्ति

२ ३र ४र ५ १ ३ ५ २ ३ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उऊवा२३४सोम् ।

२ १ २ १ ७ र २ ३र ४र ५ १ ३
सन्त्वाम्ह । जान्तिआया३४ । औहोवा । इहा २ ३ ४

५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वाः । एहियाइहा ॥(२) रस

र र र १ २ ३ ५ २१
न्तेमा । औहोहायि । त्रोअर्घ्या२३४मा । पिबात्२३

५ १ २ ३र ४र ५ १ ३ ५
४हायि । वरुणःका३४ । औहोवा । इहा२३४हायि ।

२ ३ ५ २११र १ ७ २ ३र ४र ५
उऊवा२३४वायि । पवमा । नास्यमरु३४ । औहोवा ।

"हर्य्यतं" [ हर्य्य गतिकान्त्योः ( भ्वा० प० ) ]। भृमृदृशी-त्यादिना अतच्। सर्वैः काम्यमानं सोमं/ "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्र" मेधाविनं सोमं/ "गणे न" आत्मीयेन† सप्तसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡। ततः "कविः" क्रान्त-प्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २ ३ १ २ ३ २
सहस्रनीथःपदवीष्कवीनाम् ¶ ।

३ २ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषस्सिषास

१ २ ३ २ ३ १ २ ३ २
न्त्सोमोविराजमनुराजतिष्टुप् ॥ २ § ॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

* 'मरुतः—आदित्यरश्मयः'—इति वि०।

† 'गणन—सम्पातेन'—इति वि०।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि०।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः।

§ ऋ० वे० ७, ४, ८, ३।

१ २ ५ ३र २ ५र ५
इ्हा२३४हायि । औहो३१२३४ । ना: । एहियाई्हा ।
४
होऽ५ई । डा(३) ॥ १६ * ॥ [७]

१ १र १ र २ र १ २ १
॥ इ्हवद्वामदेव्यम् ॥ तन्त्वा विप्रा वचोविदः । इ्हा ।
१ २ १ र
परिष्कृण्वन्ति धर्णसा२यिम् । इ्हा । सन्त्वामृजन्ता२
१ २ १ ५ ५
यि । इ्हा३ । या२३४वो६हायि(२) ॥ १८ † ॥ [८]

२ र १ २ १ ३र
॥ मार्गीयवाद्यम् ॥ रसौहोवा । तेमा२यि । त्वो
२ ३ ५ १ २ १ २ १र
अर्ध्या२३४मा । पिबन्तुव । रुणा:का१वा२यि । पव ।
२ २ २ ५ १ ३ ५र र २
औ३होयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।
६ १ १ १ १
हुता२३४५ः(३) ॥ २० ‡ ॥ [९] ११

* ऊ० गा० २२प्र० २ख० १६सा० ।

† ऊ० गा० २२प्र० १ख० १९सा० ।

‡ ऊ० गा० २२प्र० १ख० २०सा० ।

सम्भक्ताः "सहस्रनीथः" [नीथा स्तुतिः] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवीः" स्खलितानां पदानां साधुत्वेन संयोजयिता यः सोमो विद्यते स "महिषः" महान् पूज्यो वा सोमः "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमानः सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

३ २३ १ २३२ ३१ १
चमूषच्छ्येनःशकुनोविभृत्वा

३२ ३१र २र ३ १२
गोविन्दुर्द्रप्सआयुधानिबिभ्रत्।

३२ ३१र २र ३२
अपामूर्मिꣳसचमानःसमुद्र

३ २ ३१ २ ३१ २
न्तुरीयन्धाममहिषोविवक्ति॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमानः "श्येनः" शंसनीयः, "शकुनः" शक्तः सामर्थ्यकारी "विभृत्वा" [हरतेरातोमनिन्क्वनिप्-त्यादिना (३, २, ७४) क्वनिप्] पात्रेषु विहरणशीलः

---

* ऋ० वे० ७, ४, ६, ४।

† 'चमूषत्— * * *। अथवा चमूम् सेनासु सीदति'—इति वि०।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा।

३ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान" पूयमान सोम! "पिशङ्गं" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतृणामभि चरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया।

२ २उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्यये वृषोअचिक्रदद्वने।
३ १ २ ३ १र २र २ १
देवानाꣳसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡ ॥ १२

* 'बृहती, सौत्स्वणोरन्ध्र-प्रभृतीनि ब्राह्मणोक्तानि'—इति वि०।

† छ० आ० ६, १, ४, ७ (२भा० ३९७पृ०)=ऋ० वे० ७, ५, १६, १।

‡ ऋ० वे० ७, ५, १६, २।

"गोविन्दुः" यजमानानां गवां लम्भकः* [ विन्दुरिन्दुरिति उ-प्रत्ययान्तत्वेन निपातितः ] "द्रप्सः" धारयन्† "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [ अन्तरिक्षनामैतत् ( निघ० १, ३ ) ] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विद्यत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमान्नक्षत्राणामधिपतिः सद्यमत्वैवेचित्यन्तैर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

॥ पार्थम् ॥ ओ३हो३होयि । शिशुञ्जज्ञा । ना३ हर्यं । तम्मृजन्तायि । शुभन्तिवायि । प्रा३मरु । तो गणेना । कविगीर्भायिः । का३विये । नाकविरसान् । सोमःपवायि । चा३मति । आ३४३यि । ती३रापुयि भा६५६न् ॥(१) ऋषिमनाः । या३ऋषि । क्रत्स्वर्षाः । सहस्रनायि । था३ःपद । वीःकवीनाम् । तृतीयन्धा ।

---

* 'गोविन्दुः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा । एतानि यो विन्दति स गोवित् । विदज्ञाने विदलाभे विदसत्तायाम्'—इति वि० ।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि० ।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि० ।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले, पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम! पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अञ्जमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि॥ २॥ १२

२ र १
॥ औक्ष्णोरन्ध्रम्॥ मृज्यमानाः। सुहस्तियाइ। सा
२ ४ ५ २ १ २ ४ ५ २
मू३द्रायिवा। चमिन्वसा३यि। रायो३म्पायिशा। गम्ब
१ ३ ५ १ २र १ २
ऊला३म्। पूरूरस्पृ२३४हाम्। पवमा। ना। औ३
२ ३ ४ ५ २ र
हो। भियो२३४वा। षा५सो६हायि॥(१) पवमाना।
१ २ ४ ५ २ १ २
भिंयर्षसा३यि। पावा३माना। भियर्षसा३यि। पूना३

---

* 'वृषा उ इति पदपूरणः'—इति वि० सम्मतस्यैष छेदः पदकारस्य तथाहि—
१ २र ३
"वृषा। उ"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मध्ये'—इति।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम'—इति वि०।

माइमहि। षःसिषासान्। सोमोबिरा। जाइमनु।
राइ४३। जाइतापुयिष्ट६५६॥(२) चिमूषच्छायि। ना
इःशकु। नोविभृत्वा। गोविन्दुद्रा। प्साइआयु।
धानिबिभ्रात्। अपामूर्मायिम्। सचमा। नःसमुद्रा
म्। ओइहोइहोयि। तुरीयन्धा। माइमहि। षोइ
४३। वाइयिवाप्ताक्ता६५६यि(३)॥ १२ *॥ [१]

॥ महावामदेव्यम्॥ आऽ५यिआम्। यज्ञाइनाइ५
हर्य्यताम्। मा। जन्तिआशुम्भन्तिविप्रमरुतोगणेनकवि
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औइहोहायि।
विचाइइमर्तायि। एत्ये। होइ। ऊम्मा२। राऽरयि
भो ३ ५ हायि॥(१) आऽ५षिं। मनाइयाइऋषिकृत्।
सू। वर्षाःसहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

* ऊ० गा० ५प्र० १ख० १२मा०।

नोवा । रेपवमा३ । नोआ२व्या२३४यायि । वृषोअ । चा । औ३हो । क्रदो२३४वा । वा५नो६हायि ॥(२) वृषोअचायि । क्रदद्वना३यि । वार्षी३आचायि । क्रद द्वना३यि । दायिवा३ना५सो । मपवमा३ । नना२यि ष्का२३४र्त्ताम् । गोभिर । जा । औ३हो । नओर३ ४वा । षा५सो६हायि(३) ॥ १ * ॥ [१]

॥ स्वारेडमौत्क्षोरन्ध्रम् ॥ मृज्यमानःसुहस्त्या । समु द्रे वोवा । चामिन्वमि । रायिम्पिशा ३ । हा ३ हा । गम्बकुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा २३३यि ॥(१) पवमानाभियर्षसि । पवमानोवा । भाय र्षसि । पूनानोवा ३ । हा ३ हा । रेपवमानोअव्यये । वार्षोअचा३यि । हा३हायि । क्रदद्वा२३ना३४३यि ॥(२)

---

* ऊ० गा० ३प्र० १अ० १सा० ।

२ २ १ १ १ २ २ १२ २
सिषासन्सोमः। वा। औ३होहायि। राजा२३मनू।
३२२ २ १ १ २ २
राजौहो३। ऊम्मा२। ता ऽ२यिष्टो३५हायि॥(२) चा
२ ४ २ ४ ५ १ २ २
ऽ५मू। षक्क्रा३यिना३ःशकुनाः। वायि। भल्वागोवि
२ २ २ २ २ २ १२
न्दुर्द्रप्सआयुधानिबिभ्रदपामूर्म्मिं सचमानःसमुद्रन्तुरी।
२ ३ २ १२ २ ३२ २ १
या। औ३होहायि। धामा२३महायि। षोवौहो३।
१ १ २
ऊम्मा२। वा ऽ२क्तो३५हायि(३)॥ ७ *॥ [२]

२
॥ हाउउऊवायिवासिष्ठम्॥ हायि। उऊवायि।
३ २ ३२४२ ५ १ २ १ २ ३ ४ ५
शिशा३४औहोवा। जज्ञा। ना३हर्य्यं। तम्मृजन्त्ता
३ २ ३२ ४२ ५ १ २ १ २
यि। शुम्भा३४औहोवा। तिवायि। प्रा३म्मरु। तौ
३ ४ ५ २ ३ २ ३२ ५२ ५ १२ २ १२
गणेना। कवा३४औहोवा। गीर्भायिः। का३विय।
२ ३ ४ ५ ३२ २ ३२ ४२ ५ १ २
नाकविःसान्। सोमा३४औहोवा। पवायि। त्रा३
१ २ २ ४ ३ २
मति। षा३४३यि। ती३रा५यिभा६५६न्॥(१) ऋषा

* ऊ० गा० १०प्र० १ख० ७गा०।

१ र २ १ र २र १ २ १ २र १
वृषोअचिक्रदद्वने । वृषोअचोवा । क्रादद्वने । दायि
र र २ २ २ १ २र १ र
वानाᳲसो३ । द्दा३द्दा । मपवमाननिष्कृतम् । गोभा
२ २ २ र ५ २ २
यिरञ्ज्ञा३ । द्दा३द्दा । नोअर्षा२३सा३४३यि । ओ२३
४५ई । डा(३) ॥ २ * ॥ [२]

१ १ र २ १ १
॥ वाजजित् † ॥ मृज्यमानःसुहा । स्तिया२ । समू
१ र १ २र १ १
२हो । द्रेवा२द्दो । चामिन्वसायि । रया२यिᳲहो
१ २ १ २र १
यि । पिशा२हो । गम्वङ्गलाम् । पूरुस्पृहाम् । पवा
१ र १ २र १ २ १ २र
२हो । माना२हो । भीयर्षसा३१उवा२३ ॥(१) पवमा
र १ १ १ र १र
नामिया । षसा२यि । पवा२द्दो । माना२हो । भी
१ १ र १ २र १ २र
यर्षसायि । पुना२द्दो । नोवा२द्दो । २पवमा । नो
१ १ १ २र १
अव्ययायि । वृषो२द्दोयि । अचा२यिद्दोयि । क्राद
२ १र २ १
द्वना३१उवा२३ ॥(२) वृषोअचिक्रदात् । वना२यि ।

* ऊ० गा० ३प्र० १ख० २सा० ।

† "वार्षंद्वाजजिदोद्द्णोरत्नम्"—इति ख० पु० पाठः ।

३र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा। मना:। या३ऋषि। ऋत्सुवर्षाः। स

१ ३र ४र ५ १ १ १ २ २ ४ ५
हा३४औहोवा। स्वनायि। था३:पद। वी:कवीनाम्।

३ २ ३र ४र ५ १ २ १ २ ३ ४ ५
तृता३४औहोवा। यन्धा। मा३महि। ष:सिषासान्।

३र २ ३र ४र ५ १ २ १ १ २
सोमा३४औहोवा। विरा। जा३मनु। रा३४३। जा

४ १ २ ३र ४र ५ १
३ता५यिष्टू६५६प्॥(२) चमू३४औहोवा। षच्छ्रायि।

२ १ १ २ ३ ४ ५ ३र २ ३र ४र ५ १
ना३:शकु। नोविभूत्वा। गोवा३४औहोवा। दुर्द्रा।

२ १र १र १ ५ १ २ ३र ४र ५ १
प्सा३आयु। धानिविभ्रात्। अपा३४औहोवा। ऊ

२ १ र २ ३ ४ ५ २
म्मायिम्। सचमा। न:समुद्राम्। हायि। उऊवा

३ १ ३र ४र ५ १ २ १ २
यि। तुरा३४औहोवा। यन्धा। मा३महि। षो३४

१ ४
३। वा३यिवा५क्ता६५६यि(३)॥ ७ *॥ [३]

१ २ ३ १ ३र
॥ उऊवायिवासिष्ठम्॥ उऊवायि। ग्रिशा३४औ

४र ५ १ २ १ १ ३ ४ ५ १ २
होवा। जन्मा। ना३९हर्य्य। तंमृजन्तायि। प्रुभा

---

* ऊ० गा० १७प्र० १ख० ७सा०।

१ १ १ १र १ १ र
वृषो२होयि। अचा२यिहोयि। क्रादद्नायि। देवा

१ र १ ११ १र १ र
२हो। नाऽसो२हो। मपवमा। नानिष्कृताम्। गो

१ १ १र १ १
भा२यिहौयि। अञ्ज्ञा२हो। नोअर्षसा३१उवा२३।

१र१र २ २
वाजोजिगो३वाऽ१(३)॥ ३ *॥ [३]

२ र १ १ १ १ १
॥ वरुणसाम॥ मृज्यमानःसुहस्त्योवा। ओवा। सा

२ र र १ २ १ २ १
मुद्रेवा। चमायिन्वा१सो२। रा२३यीम्। पा२३यि

२ १ २ १ २ १ ५ २ १
शा। गम्वङ्कलम्। पुरु२३हायि। स्पृहा३मा। पव

२र र १ २ १ २ १ र २ ५ २
मानाभियर्षसि। पा२३वा। मानाभियो३। हो३हो२३

५ ४ ५ १ र र १ २
४। वा। षापूसो६हायि॥(१) पवमानाभियर्षसोवा।

१ २ १ २र र १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।

१ २ १र २ र १र २ १ ४ २
नो२३वा। रेपवमा। नोआ२३हायि। व्यया३आ।

१र २ १२र १ २ १ २ ५ २
वृषोअचिक्रदद्वने। वा२३र्णो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

३४औहोवा। तिवायि। प्रा३म्मरु। नोगणेना। क
वा३४औहोवा। गीर्भायिः। का३विये। नाकविःसा
न। सोमा३४औहोवा। पवायि। त्रा३मति। आ
३४३यि। ती३रा५यिभा६५६न्॥(१) ऋषा३४औहोवा।
मनाः। या३ऋषि। कृत्स्वर्षाः। सहा३४औहोवा।
स्रनायि। था३ःपद। वीःकवीनाम्। तृता३४औहो
वा। यन्धा। मा३महि। षःसिषासान्। सोमा ३ ४
औहोवा। विरा। जा३मनु। रा३४३। जा३ता५
यिष्टू६५६प्॥(२) चमू३४औहोवा। षच्छ्रायि। ना
३ःश्कु। नोविभृत्वाम्। गावा३४औहोवा। दुद्री।
प्सा३आयु। धानिबिभ्रात्। अपा३४औहोवा। ऊ
र्म्मीयिम्। सचमा। नःसमुद्राम्। उक्षवायि। तु

५ ४ ५ १र १ १
४। वा। वा५नोई्वायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ २ १र २ १ २ १ २
ओवा। वार्षोअचि। क्रदादा१ना२यि। दा२३यिवा।
१ २ १ २र १ २ १ ऽ २
ना२३९सो। मपवमा। नजा२३हायि। क्रता ३ मा।
२ १ २ १र २ १ १ १ २ २ ऽ
गोभिरज्ञानोअर्षसि। गो२३भायिः। आज्ञानओ३।
२ १ ५ ४ ५
षो३हो२३४। वा। षा५सोई्वायि(३) ॥ ४ * ॥ [४]

२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा
२ १र २ १ १ १ १ २ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रे वाचमिन्व
१ २ १ १ १ १ २ १ २ १ २ १ २ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ २र र १ २ १
हम्। इहा। उपा २ ३ ४ ५। पवमानाभियर्षसि। इ
२ १ १ १ १ १ २र र १ २ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
२ १ १ १ १ १ २र २ १ २ १ २ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।
१र १र र र १र र १ १र १ २ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १ख० ४गा०।

१ ३२ ४२ ५ १ १ १ २ १
रा३४औहोवा। यन्श्वा। मा३मच्चि। षो३४३। वा
४
३यिवा५क्ता६५६यि(३) ॥ १८ * ॥ [४]

१ १ १ १
॥ उद्वद्भार्गवम् ॥ भिप्रुष्वाप्ता२३। नछ्द्दर्यांता
१२ ३ १ २ १
२३म्। म्टजन्तायि। प्रुष्मन्तायिवा२३यि। प्रम्महूतो
२ १२ २ १ २२ १
२३। गणेना। कविर्गायिर्भा२३यिः। काविर्येना२३ः।
२ १ २२ १ २ १ २
कविःसान्। सोमःपावा२३यि। च्चमतायियि२३। ति
१२ २ १ २ १ ३ १
रेभा३नाउ ॥(१) च्चषिमाना२३। श्रोयच्चषीकृ२३त्।
२ १ २ १ २ १ २ १२
सुवर्षाः। सहस्राना२३यि। थःपदावा२३यिः। कवी
२२ १ २ १ १ १२
नाम्। तृतीयान्धा२३। ममच्चायिषा२३ः। सिषासा
२२ २ १ २ १ २ १ १
न्। सोमोवायिरा२३। जमनूरा२३। जनिष्ठा३१उ ॥(२)
२२ १ २ १ २ १ २२
चमूषाष्टरा२३यि। नःशकूनो२३। विभृत्वा। गोवि
१ २२ १ २ १ २२ १
न्दूद्र२३। प्रसश्चयूधा२३। निर्बिश्चात्। श्रपामूर्म्मा

* ऊ० गा० १७प्र० १ख० १८सा०।

२ १२र १ ३ ११११ १र २ १
अचिक्रदद्वने। इहा। उपा२३४५॥(२) वृषोअचिक्रद

२र १ ३ ११११ १र २ १२र १
द्वने। इहा। उपा२३४५। वृषोअचिक्रदद्वने। इहा।

३ ११११ २र१र र २र र १
उपा२३४५। देवाजा९सोमपवमाननिष्कृतम्। इहा।

३ ११११ २उ ऽ ऽ १र १र २र २
उपा२३४५। हाउहाउहाउवा। गोभिरञ्जानोअर्षसि।

१ ३ ११११
इहा। उपा२३४५(३)॥ ५ *॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम्॥ मृज्यमानःसुहस्तिया। समुद्रेवाऽच

१ २ १ २ २ १
मिन्वसायि। रयिम्पा२३यिशा। गाम्वङ्कलम्। पुरुस्प

२ ३ ३ १ २र २ १ २ १
हाम। औहो३४वाहायि। प। वामार२३ना ३। हो

२ २ १ २ ११२रर १ २ १
वा३हा। भियर्षा२३सा३४३यि॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ २र
यि। पुनानोर२३वा। रेपवमा। नोआव्यायां। औ

१ ४ ३र २ १ २ १ २ २
हो३वाहायि। वृ। षोआ२३चा३यि। होवा३हायि।

१ २ र १ १२१ र
क्रदद्वा२३ना३४३यि॥(२) वृषोअचिक्रदद्वनायि। वृषो

* ऊ० गा० ९प्र० २अ० ५ मा०।

२ १ २ १ १२ १
२३यिम्। सचमाना२३:। समुद्राम्। तुरीयान्धा२३।
ममहायिषो२३। विवक्ता३१उवा२३४५(३) ॥ ४ * ॥ [५]

२र र २
॥ वैश्वज्योतिराद्यम् ॥ हाउहोवा३हायि। शिशुञ्ज
र १ ७ १ १ १ १ र
ज्ञानां्ँहर्य्या३तांम्टजन्ता२३४५यि। शुम्भन्तिविप्रम्मरु
१ ७ र १ १ १ १ २ र र १ ७ १ १ १ १
३तोगणेना२३४५। कविर्गीर्भिःकाव्ये३नाकविःसा२३४५
२र १ ७ र १ १ १ १ २
न्। सोमःपवित्रमती३यायितिरेभा२३४५न् ॥(१) ऋषि
र १ ७ २ र १
मनायऋषी३कृत्सुवर्षा२३४५:। सहस्रनीथःपदा३वायिः
७ र १ १ १ १ २ र १ ७ र १ १ १ १
कवीना२३४५म्। तृतीयन्धाममही३षाःसिषासा२३४५
२र र र १ ७ १ १ १ १ २ र र
न्। सोमोविराजमनू३राजतिष्टू२३४५प् ॥(२) चमूषच्छ्ये
१ ७ १ १ १ १ २र र १ ७
नःशकुनोविभृत्वा२३४५। गोविन्दुर्द्रप्सआयू३धानिबि
१ १ १ १ २ र र ५र१ ७ १ १ १ १
भ्रा२३४५त्। अपामूर्म्मिं्ँसचमा३नाःसमुद्राम्३४५म्।

* क० गा० २३प्र० २अ० ४सा०।

अचायिक्रदद्दनायि । देवाना२३७सो । मापवमा । न
नायिष्कार्त्ताम् । औहो३४वाहायि । गो । भायिरा
२३ञ्जा३ । होवा३हा । नोअषा२३सा३४३यि । ओ
२३४५ई । डा(३) ॥ ५ * ॥ [६]

॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा ।
स्तायासा२३४म् । द्रेवा॰ । चमा३४५यि । न्वा२ ३ ४
सो । रया३४ । औहोवा । पिशङ्गम्बऊला२म् । पुरू
३४५ । स्पृ२३४हाम् । पवा३४ । औहोवा । माना२ ।
भिया३४५ । षा२३४सो ॥(१) पवमानाभियाहाउहोवा ।
षासायिपा२३४वा । माना२ । भिया३४५ । षा२३४सो ।
पुना३४ । औहोवा । नोवा२पवमा२ । नोआ३४५ ।
व्या२३४ये । वृषो३४ । औहोवा । आचा३यि । क्रदा

* ऊ० गा० ८प्र० १अ० ५सा० ।

२र र २र १ ७ ११११ २र र २
तुरीयन्धाममचो३षोविवक्ता२३४५यि। हाउहोवा३हायि।
१११
वा३४५(३)॥७॥*[६]१

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा।

३१र २र ३ २ ३१र २र ३ १ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन्।
१२ ३ २क २र
वर्द्धन्तोअस्यवीर्यम्॥१†॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते॥१॥

अथ द्वितीया।

३ १२ ३१२१२ २ २३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना।
१२ ३१२
तेनोधत्तसुवीर्यम्॥२‡॥

हे सोमाः! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः"¶ चमसेषु सीदन्तः "गच्छन्तः" "वायुम्" "अश्विना" अश्विनौ च

* ऊ० गा० २२प्र० २श्व० ७सा०।

† ऋ० वे० ९, ७, १०, १।   ‡ ऋ० वे० ९, ७, २०, २।

¶ 'चमूषदः—भक्षणीयेषु सीदन्ति अथवा चधिषवणफलकचर्मण उपरि सीदन्ति चमूषदः'—इति वि०।

३४५त्। वा२३४ने॥(२) वृषोअचिक्रदत्ताउवोवा। वा। वामायिवा२३र्षा। अचा२यि। क्रदा३४५त्। वा२३४ने। देवा३४। औहोवा। ना॰सोमपवमा२। नना३४५यिः। क्रा२३४त्ताम्। गोभा३४। औहोवा। आञ्जा२। नआ३४५। षा३४५। षा२३४सौ(३)॥ ६*॥[७]

॥अभीवर्त्तम्॥ पवा३मा३नाऽभियर्षसोवा। पावमाना। भियार्षा१सा२यि। पूनानोवा३१२३४। रेपवमा। नोआव्या१या२यि। वृषोआ१चा२यि। क्रदा३त्। वा२३४५। ना२३४५यि(२)॥ ८†॥ [८]

॥कालेयम्‡॥ वृषोआ३चिक्रदद्दनायि। वृषोअचायि। क्रदद्दना२३यि। देवाना॰सो३। मा२३४। पव

*ऊ० गा० ८प्र० १ख० ६सा०।

† ऊ० गा० ८प्र० १ख० ८सा०।

‡ "महाकालेयम्"—इति ख० पु० पाठः।

"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २   २ १ २   २ १र   २र
इन्द्रस्यसोमराधसेपुनानोहार्द्दिचोदय ।
३ १ २ १ २ ३ १ १
देवानांयोनिमासदम् ॥ ३* ॥

हे सोम ! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्द्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय । अहमपि "देवानाम्" इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यवन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२ १ २ ३ २ २ १ २ ३ १ २ ३ २ ३ १ २
मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः ।
२ ३ १ २
अनुविप्राअमादिषुः ॥ ४ ‡ ॥

---

* ऋ० वे० ६, ७, ३०, ३ ।

† 'हार्द्दि—हृदये'—इति वि० ।

‡ ऋ० वे० ६, ७, ३०, ४ ।

माननिः । क्रा३र्त्ताम् । गोभायिरजौ । वा३४३ । ओ ३४वा । नोआ५पूर्षसायि । हो५ई । डा(३) ॥ ९ ॥ [९]

॥ पौरुमीढम् ॥ पवमा । नाभा३४औहोवा । आ र्षसि । पवमाना । भियर्षा२३सायि । पुनानोवा । रे पवा२३मा । नोअव्ययायि । वृषोआ२३चायि । क्रद डा२३४५ना६५६यि । दत्ता३या२३४५(२) ॥ १२ † ॥ [१०]

॥ आङ्गिरसाङ्गोष्ठम् ‡ ॥ हाउहाउहाउवा । पुना नोवारेपवमानोअव्यये । इहा । उपा२३४५ । वृषोअ चिक्रदद्वने । इहा । उपा२३४५ । देवानाᳬसोमपव माननिष्कृतम् । इहा । उपा२३४५ । हाउहाउहाउ

---

* ऊ० गा० ८प्र० २ख० ६गा० ।

† ऊ० गा० ९प्र० २ख० १२गा० ।

‡ "प्रमोद्दगोष्ठम्"—इति ख० पु० पाठः ।

हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः [ "क्षिपः अङ्गुलिनामैतत् ( २, ५, ३, ) ] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" होत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी।

३ १ २ ३ १ २ ३१ २ ३ १ २र ३क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः।
१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोविकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी।

३ १ २ ३ ३ १र २र ३ १र २र
पुनानःकलशेष्वावस्त्राण्यरुषोहरिः।
२ ३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

---

* 'सप्तधीतयः,—बुद्धियुक्ताः सप्तर्त्विजः, धीतयः स्थापनकराः'—इति वि०।

† ऋ० वे० ६, ७, ३०, ५।

‡ ऋ० वे० ६, ७, ३०, ६।

१र २ र १र २ १ ३ १ १ १
वा। गोभिरञ्जानोअर्षसि। दूहा। उपा २ ३ ४

१
५(२)॥ ५*॥ [११]

२र १र२र १ २ १ २ १ र
॥ कण्वरथन्तरम्॥ पावमानाभियर्षसायि। पवमा

२ १ २ २ र र र र र र ३
ना। भा३यार्षा३सायि। पुनानोवारिपवमानोअव्यया

५र २ १र ५ १ १
२३४ऐही। वृषोआ२३४चायि। क्र.दा३१उवा२३। ए३।

१ ३ १
वनआ(२)॥ १४ †॥ [१२]

१र १र २ १ २ १ २ १ र
॥ कण्वरथन्तरम्॥ मार्ज्यमानःसुहस्तिया। समुद्रे

२ १ १ २
वा। चा३मायिन्वा३सायि। रयिम्पिशङ्गंबहुलम्पुरुस्पृ

३ ५ र २ १ ५ १ २
हा२३४मैंहो। पवमा२३४ना। भिया३१उवा२३। ए३।

१ ३ २
षसआ(१)॥ ७ ‡॥ [१३]

२ १ र १ १र
॥ अर्कपुष्पोत्तरम्॥ मृज्यमानःसुहस्त्या। ऊवायि।

---

* ऊ० गा० १९प्र० २ख०५सा० ।

† ऊ० गा० १९प्र० २ख० १४सा० ।

‡ ऊ०गा० २०प्र० २ख० ७सा० ।

"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्य्याच्छादयति† ॥ ६ ॥

अथ सप्तमी।

२ २ ३ १ २ २ २उ ३ २ ३ १ २
मघोनआपवस्वनोजहिविश्वाअपद्विषः।
२ ३ १ २ ३ १ २
इन्दोसखायमाविश ॥ ७ ‡ ॥

हे "इन्दो" सोम! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" क्षर "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी।

३ १ २ ३१र २र ३ १ २
नृचक्षसन्त्वावयमिन्द्रपीतꣳस्वर्विदम्।
३ १ २ ३१र २
भक्षीमहिप्रजामिषम् ॥ ८ ¶ ॥

---

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि०।

† 'अव्यत—गमय'—इति वि०।

‡ ऋ० वे० ६, ७, २१, १।

¶ ऋ० वे० ६, ७, २१, २।

२र १　१र२　२　१　२र १
औहोवा२। समुद्रेवाचमिन्वसि। ऊवायि। औहो
१ ११ २ १ २१ २　१　२र
वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ
१　१ २र र १ २　१　२र र
होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।
३　५र र　१ २र र १ २　१
वा२३४। औहोवा ॥(१) पवमानाभियर्षसि। ऊवायि।
२र १　र१र र२र१ २र र　१ ३र　१
औहोवा२। पुनानोवा२पवमानोअव्यये। ऊवायि।
२र १　१र २　१ २र　१　२र　१
औहोवा२। वृषाअचिक्रदद्वने। ऊवायि। औ। हो२।
३　५र र　१ र २　१ २र　१
वा२३४। औहोवा ॥(२) वृषोअचिक्रदद्वने। ऊवायि।
२र १　१ र २　१ २र　१　२र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा
र१र र　२र　र　१　२र
२। देवानांसोमपवमाननिष्कृतम्। ऊवायि। औ
१　१र　२ र १र　२　१　२र　१
होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।
३　५र र　११ २ र१र २ १र　३ १ १
वा२३४ औहोवा। अक्षस्यदेवाःपरमेवियो२मा२३
११
४५न् ३) ॥ ८ * ॥ [१४] १२

* ऊ० गा० ८प्र० २ख० ८गा०।

हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्* "इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम॥ ८॥

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।

१ २ ३ १ २
सहोनःसोमपृत्सुधाः॥ ६ †॥ २

हे "सोम!" त्वं "दिवः" द्युलोकाद् "वृष्टिं" वर्षं "परिस्रव" परितो वर्ष, "पृथिव्या अधि" [अधीति सप्तम्यर्थानुवादी] "द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः" बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि॥ ६॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य प्रथमः खण्डः॥ १॥

---

* 'स्वर्विदं—स्वर्गस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, २१, ३।

‡ 'नः—अस्मभ्यम्'—इति वि०।

एतमुत्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

३२ ३१उ ३ १ २ ३१ ३ १ २
एतमुत्यन्दशक्षिपोमृजन्तिसिन्धुमातरम् ।
१ २ ३ १ २
समादित्येभिरख्यत ॥ १ * ॥

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नवः‡ मातरो भवन्ति । "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दशसङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति । अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया ।

१ २र३ २ ३ १ २ ३१२ ३ १२ २
समिन्द्रेणोतवायुनासुतएतिपवित्रआ ।
१ २र ३ १ २
सᳬसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥

* ऋ० वे० ७, १, १९, १ ।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम् ।

‡ —तास्च नव "इमम्मेगङ्गे ( १, ६, ७, ५ )"—इति बह्वृक्श्रुता ज्ञेयाः । यथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी ( इरावती ), असिक्नी, मरुद्वृधा, वितस्ता, आर्जिकीया ( विपाट ) ;—इत्येता नव ।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् ( २, ५ ) ।

§ "बहुलञ्छन्दसि ( ७, १, १० )"—इति भिस ऐसभावः ।

‖ ऋ० वे० ७, १, १९, २ ।

अथ द्वितीये खण्डे—

सोमःपुनानइति नवर्चं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १ २   ३ १ २   ३ १ २
सोमःपुनानोअर्षतिसहस्रधारोअत्यविः ।
३ १र   २र   ३ २
वायोरिन्द्रस्यनिष्कृतम् ॥ १ * ॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति। कीदृशोऽयम् ? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते ; अवेर्लोमभिर्निष्पादितं दशापवित्रमित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम् ? "वायोः" "इन्द्रस्य" च पानायेति शेषः । किम्प्रति ? "निष्कृतम्" [ निरित्येषः समित्येतस्मिन्नर्थे ] संस्कृतं पात्रं प्रति ॥ १ ॥

अथ द्वितीया ।

१ २   ३ १ २ ३ १र २र
पवमानमवस्यवोविप्रमभिप्रगायत ।
३   २ ३ १ २
सुष्वाणन्देववीतये ॥ २ † ॥

हे "अवस्यवः" रक्षण-कामाः ! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद्बुद्धं वा

* ऋ० वे० ९, ८, १, १ ।
† ऋ० वे० ९, ८, १, २ ।

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते । "उत" अपि च "वायुना" समेति "सूर्य्यस्य "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३१ २ ३ १ २
सनोभगायवायवेपूष्णेपवस्वमधुमान् ।

१ २ ३ १ ३२
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम ! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" चर ॥ ३ ॥ १३

२र १ र १ २ १ २ १ २
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः । इहा । म्ट

१ र १ २ १ र र १ २
जन्तिसिन्धुमातरा२म् । इहा । समादित्येभिरा२ । इहा

१ ५ ५ १ र र र र १ २र १ २र १
३ । ख्या२३४तोई्हायि ॥(१) समिन्द्रेणातवायुना । इ

२ १ र १ २ १ र
हा । सुतएतिपवित्रआ२ । इहा । सꣳसूर्य्यस्यरा२ ।

१ २ १ ५ ५ १ २र १ र २ र १ २र
इहा३ । भ्मा२३४यिभोई्हायि ॥(२) सनोभगायवायवे ।

---

* ऋ० व० ७, १, १९, ४ ।

[अथवा विप्रइति मेधावि नामसु (निघ०३,१५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २र ३ १ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः।
३ २ ३ १ २
गृणानादेववीतये॥ ३ †॥

"पवन्ते" चरन्ति "सोमाः"। किमर्थम्? "वाजसातये" अन्नस्य लाभाय। कीदृशाः? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३,१,८५)] स्तूयमानाः। पुनः किमर्थम्? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति॥ ३॥

अथ चतुर्थी।

३ २ ३ १ २ ३ १ २ ३ १र २र
उतनोवाजसातयेपवस्वबृहतीरिषः।
३ १ २ ३ १ २
द्युमदिन्दोसुवीर्यम्॥ ४ ¶॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि०।

† ऋ० वे० ६, ५,२३,२।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि०।

¶ ऋ० वे० ६,८,२,१।

१ १ १र र
इ्हा । पूष्णे पवस्वमधुमा २न् । इ्हा । चारुम्मिंत्रे व

१ २ १ ५ ५
रु २ । इ्हा३ । णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१]

५र ४ २ ४ ५ १ १
॥ अयासोमीयम ॥ एता३म्रू३त्यन्दग्निपा: । मृज

० १ १ २र १
न्तिसायि । धुमा२ता२३४राम् । सामादित्या२३यि ।

२ ४ ५ ४ २ ४र ५र २
भिरा३स्था५ना६५६ ॥(१) समा३यिन्द्रे ३णोतवायुना । सु

१र ० ३ ५ १ १र १
तएतायि । पवा२यित्रा२ ३ ४ आ । सा०सूरिया २ ३ ।

२ ४ ५ ४ २ ४र ५र
स्यरा३स्मा५यिभा६५६यि: ॥(१) सनो३भा३गायवायवायि ।

१र १र ० ३ ५ १ २ १
पूष्णेपवा । स्वमा२धू२३४मान् । चारुम्मिंत्रा २ ३ यि ।

२ ४
वरु३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थ: खण्ड: ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २ऋ० ७सा० ।

† ऊ० गा० १३प्र० २ऋ० १४सा० ।

‡ "उक्तो माध्यन्दिन: पवमान:"—इति वि० ।

. हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः । "उत्" अथवा "नः" अस्माकं"* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी ।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
अत्याह्नियानानहेतृभिरसृग्रं वाजसातये ।
२उ ३ १ २ ३ १ २
विवारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "ह्नियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि० ।

† 'वाजसातये अन्नदानार्थम्'—इति वि० ।

‡ ऋ० मे० ६, ८, २, २ ।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "अत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्येण । विवरणकृता तु हिनाम दानवदित्यादिना 'व्याख्यातम्' । परन्तूभयविषमेव व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात् ।

अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा।

१र २ ३ १ ३ १ २ ३ १ २
रेवतीर्नःसधमादइन्द्रे सन्तुतुविवाजाः।
३ १ ३ १ ३ १ २
क्षुमन्तोयाभिर्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" चौराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च"सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि"रयेर्मतौ बहुलम् ( ६, १, ३४ वा० )" —इति सम्प्रसारणम, परपूर्वत्वे, "छन्दसीरः (८, २, १५ )"—इति मतुपो वत्वम, "वाच्छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम्। सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि ( ६, ३, ८६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना ( ६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

---

* 'इदानीं' इष्टानि'—इति वि०।

† 'रेवतीषु वारवन्तीयं इष्ट' भवति'—इति वि०।

‡ ऋ० आ० १, १, १, ९ (१भा० ३५३पृ०)=ऋ० वे० १,१,३०,३।

अथ षष्ठी।

१ २ ३ १ २ ३ १र १र २ २ ३ १ २
तेनःसहस्रिणꣳरयिम्पवन्तामासुवीर्यम्।
३ २ ३ २ ३ १ २
स्वानादेवासइन्दवः॥ ६ *॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्र-सङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः सूयमाना "देवासः" द्योतनादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

२ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
वाश्राअर्षन्तीन्दवोभिवत्सन्नमातरः।
३ १र १र
दधन्विरेगभस्त्योः॥ ७ ‡॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रं प्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

* ऋ० वे० ६, ८, २, २।
† 'आ—आनुपूर्व्येण'—इति वि०।
‡ ऋ० वे० ६, ८, २, ४।
¶ 'वाश्राः—वाशनशीलाः'—इति वि०।

बहुलम् ( ६, २, १९९ )"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( ८, २, १ )। द्युमन्तः—दु द्यु रु कु शब्दे ( अदा० प० ), अस्मात् क्विपि तुगभावश्छान्दसः, "ऋस्वनुड्भ्यां मतुप् ( ६, १, १७६ )"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे ( दि० प० ), व्यत्ययेन शप्, अदुपदेशात्सार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

अथ द्वितीया।

१ २ १ २ १ २ ३ १ ३ १ २ ३ १
आ घ त्वावां त्मनायुक्तः स्तोतृभ्यो धृष्णवीयानः ।
३ २उ ३ २३र २र
ऋणोरक्षन्न चक्र्योः ॥ २ * ॥

हे "धृष्णो !" धार्ष्ट्ययुक्तेन्द्र !† "त्वावान्" त्वसदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "ईयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतॄणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ ऋणोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्र्योः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्या

---

* ऋ० वे० १,२,३०,४ ।

† 'धृष्णो—धारण-स्वभाव'—इति वि० ।

‡ 'घ—इति पद-पूरणः'—इति वि० ।

"वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च॥

"मातरः"-"धेनवः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

२ ३ १ २ ३ १र २र ३ १ २
जुष्टइन्द्रायमत्सरःपवमानःकनिक्रदत् ।
१ २ २ ३ १ २
विश्वाअपद्विषोजहि ॥ ८ * ॥

"इन्द्राय" "जुष्टः" पर्याप्तः सोमो भवतीति शेषः "मत्सरः" सोमः [ "मन्दतेस्तृप्ति-कर्मणः"—इति निरुक्तम् ] "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्वानस्माकं द्वेष्टॄन् "अप जहि" ॥

"पवमानः"-"पवमाना"—इति पाठौ ॥ ८ ॥

अथ नवमी ।

३ २ ३ १ २ ३ १ २ ३ १ २
अपघ्नन्तोअराव्णःपवमानाःस्वर्दृशः ।
१ २ ३ १ २
योनावृतस्यसीदत ॥ ९ † ॥ ३

---

* ऋ० वे० ६, ८, २, १ ।

† ऋ० वे० ६, ८, २, २ ।

नम् ( ५, २, ६४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च ( ७, २, ६८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ६१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे ( ३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते। त्वा—"मन्त्रेष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः। धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आमन्त्रितानुदात्तत्वम्। ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्यादिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम्। ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ६७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), 'बहुलञ्छन्दस्यमाङ्योगेऽपि"--इत्यडागमाभावः, विकरण-स्वरेणान्तोदात्तत्वम्। अक्षम्—"अक्षस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम्। चक्रोः—अकारस्येकारश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया।

१र २र ३ १र २र ३ २
आयद्द्वः शतक्रतवा कामञ्जरितॄणाम्।
३ २उ ३ १र २र
ऋणोरक्षन्न शचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र! "यत्" "द्वः" धनं कामितार्थ-

* ऋ० वे० १,३,३,५।

ह "पवमाना: !" "अराव्ण:" अदानान् यजमानान् "अप घ्नन्त:" हिंसन्त: "स्वर्दृश:" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमृत्विलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ८॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीय: खण्ड: ॥ २॥

---

अथ तृतीय-खण्डे—

सोमाअसृग्रमिति नवर्च्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ ३ १ २
सोमाअसृग्रमिन्दव:सुताऋतस्यधारया।
१ २ ३ १ २
इन्द्रायमधुमत्तमा: ॥ १ ‡ ॥

"ऋतस्य" यज्ञार्थं "सुता:" अभिषुता: "मधुमत्तमा:" अतिशयेन माधुर्य्योपेता: "इन्दव:" सोमा: "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* स्वर्दृश: —स्वर्गस्य लोकस्य दर्शितार:'—इति वि० ।

† 'ऋतस्य—सत्यस्य यज्ञस्यान्नस्य वा'—इति वि० ।

‡ ऋ० वे० ६, ७, २८, १ ।

रूपम् स्तोतृभिः आप्तव्यमस्ति तं कामं "जरितृणां" स्तोतृणा-मनुग्रहाय "आ ऋणोः" आनीय प्रक्षिपसि । तत्र दृष्टान्तः— "शचीभिः"कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [ शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् ( ४, १, ७३ ) ङीबन्तत्वादाद्युदात्तः ( ३, १, ४ ) ॥ ३ ॥ १४

१ २र २ र र १ २
॥ वारवन्तीयोत्तरम् ॥ रेवतीर्नाऔहोहायि । सा

३ ५ २ २ १ ५ १ १
धामा२३४दायि । इन्द्रायिसा२३४हा । तुतुविवा३४ ।

३र ४र ५ ३ ३ ५ २ ३ ५ २ १
औहोवा । हुहा२३४हायि । उज्जवा२३४जाः । क्षुम

२ १ ७ २ ३र ४र ५ १ ३ ५
न्तः । याभिर्मदा३४ । औहोवा । हुहा२३४हायि ।

३र २ ५र ५ २र र र
औहो३१२३४ । मा । एहियाइ्हा ॥ (१) आघत्वावा ०

र १ १ ३ ५ २र १ ५
औहाहायि । त्मनायू२३४क्ताः । स्तोतृभ्यो२३४हायि ।

१ र २ ३र ४र ५ १ ३ ५ २ ०
धृष्णुवीया३४ । औहोवा । हुहा२३४हायि । उज्जवा

५ १ २र १ १ ० २ ३र ४र ५ १ ३
२३४नाः । ऋणोर । क्षानचक्रा३४ । औहोवा । हुहा

५ ३र २ ३र ५
२३४हायि । औहो३१२३४ । योः । एहियाइ्हा ॥ (२)

अथ द्वितीया।

३ १र २र २ १ २ ३ २उ ३ १ २
अभिविप्रा अनूषत गावो वत्सन्न धेनवः।
१ २ ३ १ २ ३ १ २
इन्द्रꣳ सोमस्य पीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति। तत्र दृष्टान्तः—"धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिशब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ ११ ३ १ २ ३ १ २ ३ १ २ ३ २
मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित्।
१ २ ३ १र २र ३ २
सोमो गौरी अधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्य स्थाने "क्षेति" निवसति। एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मा" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरी

---

* 'विप्राः—ऋत्विजः'—इति वि०।

† ऋ० वे० ६, ७, १८, २।

‡ ऋ० वे० ६, ७, १८, ४।

१र २ २ १ २ ३ ५ २र १
आयहु वाओचोहायि । प्रातर्का२३४ताउ । आकामा२३
५ १ १ ३र ४र ५ १ २ ५
४५हायि । जरितृ३४ । ओहोवा । इहा२ ३ ४ हायि ।
१ २ ५ २ १र २ १ ७ २ ३र २र ५
उक्रवा२३४णाम् । ऋणोर । चान्नश्वा३४ । ओहोवा ।
१ २ ५ २र २ ५र ५
इहा२३४हायि । ओहो३१२३४ । भीः । एहियाईहा ।
४
होपूइ । डा(३) ॥ ७ * ॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा ।

३ २ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
२ ३ १ २ ३ २
जुहूमसि द्यविद्यवि ॥ १ † ॥

"सुरूपकृत्नु" शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं 'ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः ॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), 'नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

---

* ऊ० गा० ३प्र० १ख० ७गा० ।

† ऋ० आ० २,२,२,६ ( १भा० २६६पृ० )=ऋ० वे० १,४,७,१ ।

अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) ] "श्रितः" निवमति ॥ ३ ॥

अथ चतुर्थी।

३ १र २र ३ २ ३ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते।
२ ३ २ ३ १ २ ३ २
सोमोयःसुक्रतुःकविः ॥ ४ ‡ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी।

१र २र ३ २ ३ २ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः।
२उ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "ईदूतौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः।

† "व्योवारे"—इति ऋ०-पाठः।

‡ ऋ० वे० ९, ७, १८, ३।

¶ ~~'दिवः'—द्युलोकस्य'~~—इति वि०।

§ "कलशेष्वा"—इति ऋ०-पाठः।

‖ ऋ० वे० ९, ७, १८, ५।

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम्। जुह्मसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सु द्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्री गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया।

१ २ ३ १ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब।

३ २उ ३ २ ३ १ २
गोदाइद्रेवतोमदः॥ २ *॥

हे "सोमपाः" सोमस्य पातरिन्द्र ! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [ सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३),"लिति(६,१,१९३)-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,७,२ ।

"यः" सोमः "कलशेषु" कुम्भेषु आस्ते; यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानी सो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

अथ षष्ठी ।

२उ ३ १ २ ३ १र २र ३ १ २

प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि ।

२ ३ १ २ ३ १ २

जिन्वन्कोशम्मधुश्चुतम् ॥ ६ * ॥

"इन्दुः" सोमः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांश्च ] "मधुश्चुतं" मधुनश्चावकं द्रोण-कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः । समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टब्धे स्थाने "वाचं" "प्रेष्यति" प्रेरयति ; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी ।

१ २ ३ २ ३ १ १ ३ २ ३ १ १ ३ १ २

नित्यस्तोत्रोवनस्पतिर्धेनामन्तःसबर्दुघाम् ।

३ १र २र ३ २

हिन्वानोमानुषायुजा ॥ ७ † ॥

"नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युग्मानि‡ अह्नोनैकाहा-

* ऋ० वे० ९, ७, २८, ६ ।

† ऋ० वे० ९, ७, २९, १ ।

‡ "युजा—योगेन"—इति वि० ।

कारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२,४,७३)—इति शपो लुक्, हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
अथाते अन्तमानांविद्यामसुमतीनाम्।
२ ३ १ २ ३ १ २
मानोअतिख्यआगहि ॥ ३ *॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-क्तन्स्वरेणान्तोदात्ततैव (६,२,१३९)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३।

मकानि* "हिन्वानः" प्रीणयन् "सबर्दुधाम्" अमृतसदृशाति-प्रियवचनानि दोग्ध्रीम्† "अन्तः" स्तोतॄणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ रचयत्विति शेषः ॥

"धेनामन्तस्सबर्दुघाम्"-"धीनामन्तस्सबर्दुघस्सः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

१ २ ३ २ ३ १ २
आपवमानधारयरयिंसहस्रवर्चसम् ।
३ १ १ ३ १ २
अस्मेइन्दोस्वाभुवम् ॥ ८ ¶ ॥

हे "पवमान" पूयमान ! पुनान ! वा "इन्दो" सोम ! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः ॥ ८ ॥

अथ नवमी ।

३ १ ३१ ३ २ ३ २उ ३ १र २र ३ १
अभिप्रियादिवःकविर्विप्रःसधारयासुतः ।
१ २ ३ १ २
सोमोहिन्वेपरावति ॥ ९ § ॥ ४

---

* दिनैकसाध्यमेकाहम्, द्वादशदिनातिरिक्तसाध्यं सत्रम्, अहीनमन्यत् यागकर्म ।

† 'सबर्दुघां—सुखदोग्ध्रीं'—इति वि० ।

‡ 'धेनां—धेनूनाम्',—इति वि० । "धेना"—इति निघण्टौ वाङ्नामसु एक-पञ्चाशत्तमं पदम् (१, ११) ।

¶ ऋ० वे० ९, ७, २९, १ ।

§ ऋ० वे० ९, ७, २९, ३ ।

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवद्त्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)" —इति लुङ् न भवति ॥ ३ ॥ १५

उभेयदिन्द्ररोदसीति-तृचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

३ १र २र ३ १ २　　३ १ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।

३ १ २　　३ १ २　　३ १ ३　　३ २
महान्तन्त्वामहीनाᳪसम्राजञ्चर्षणीनाम्॥

३ १र २र　　३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ * ॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (प०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवातामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० सा० ४,१,४,१० (१भा० ७७७पृ०)=ऋ० वे० ८,७,११,१।

"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "सधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति ॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च,"सुतः"-"कविः"—इति च ॥ ८ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

अथ उत्तेशुष्मासइति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
उत्तेशुष्मासईरतेसिन्धोरूर्मेरिवस्वनः।

३ १ २ ३ २
वाणस्यचोदयापविम् ॥ १ * ॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

---

* ऋ० वे० ७, १, ७, १।

"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [ जनेस्तृन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"— इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्य इति ङीप् ( ४, १, ५ ) ॥ १ ॥

अथ द्वितीया ।

२ २ २ ३ १ २३ २ ३ १ २
दीर्घꣳह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ २ ३ २ ३ २ ३ १र १र
पूर्वेणमघवन्पदावयामजोयथायमः ।
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एव मायतां "शक्ति" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः ( ८, ३, १ )"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

* ऋ० वे० ८, ७, ११, ५ ।

यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विसृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [शब्द-नामैतत् (निघ० १, ११)] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः॥ १॥

अथ द्वितीया।

३ १ ३ १ २ ३ १ २ २ २ ३ १ २
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः।

२उ ३ २ ३ १ २
यदव्यएषिसानवि॥ २‡॥

हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि॥ २॥

अथ तृतीया।

१ २ १ ३ १ २ ३ १२ २२ ३ १ २
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः।

१ २ ३ १ २
पवमानम्मधुश्चुतम्॥ ३¶॥

* 'सिन्धोरूर्म्मेरिव—अपामिव सङ्घातः, यादृक् तेषां स्वनः'—इति वि०।

† 'वाणस्य—वीणाविशेषस्य'—इति वि०।

‡ ऋ० वे० ७, १, ७, २।

¶ ऋ० वे० ७, १, ७, ३।

पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रष्यामः शत्रून् [नियच्छसि--यमेर्लेटाड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया ।

१ १ ३ १२ २२ ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम् ।
३ १२ २२ ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माꣳअभिदासति ॥
३ १२ २२ ३ १२ २२
देवोजनित्रजीजनद्भद्राजनित्रजीजनत् ॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु । "स्म"—इति पूरकः । "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु । "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति† । समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३ ।

† 'अभिदासति—हिंसां करोति'—इति वि० ।

"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

आपवस्वमदिन्तमपवित्रन्धारयाकवे ।
अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्म्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्नुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।
एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

---

* ऋ० वे० ६, ८, १५, ६ ।

† 'अर्कोद्रोणकलशः अथवा अर्कआदित्यः अथवा आदित्यरश्मयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।

अथ षष्ठे खण्डे *—

परिस्वानइति-त्र्यृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २ ३  १  २ ३ २  ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत् ।
१ २  ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन्? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ ३ २उ ३ १ २ ३ १र २र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः ।
१ २  ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

---

* "इदानीमार्मेयो वक्तव्यः । तत्र च वैदन्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्षाणि'—इति वि० ।

† ऋ० मा० ५,१.४,९ ( २भा० २६पृ० )=ऋ० वे० ६,८,८, १ ।

‡ ऋ० वे० ६.८,८, २ ।

हे "मदिन्तम" मादयितृतम। सोम! "ऋतुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोविकारैः पयोभिः "अञ्जानः" अज्यमानः संस्तूयमानः स त्वं "पवस्व" चरत। "अनन्तरम्" "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "एन्द्रस्यजठरंविश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमि-खण्डे—

अयावीतीति तृचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ ३ १र २र ३ १ २ ३ १ ३ २

अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।

३ १ २ ३ १र २

अवाहन्नवतीर्नव॥ १ *॥

हे "इन्दो" सोम! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिक्षर†। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्रस्तत्सङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* ऋ० आ० ६, १, १, ९ (१भा० ५१४०)=ऋ० वे० ७, १, १८, १।

† 'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।

हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः॥२॥

अथ तृतीया।

१२ १२३ १ २ ३ १२ ३ १ २
त्वे विश्वे सजोषसो देवासः पीतिमाशत।
१ २ ३ १ २
मदेषु सर्वधा असि॥३*॥१७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन्॥३॥१७

॥तृतीयं वैदन्वतम्॥ पा ऽ५रि। स्वानो३गा३यिरि ष्ठाः। पवित्रे सोमो। मो अक्षरात्। पवित्रे। सोमो२३। क्षारात्॥(१) तू ऽ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः॥(१) तू ऽ५वे। विश्वे३सा३जोषसाः। देवासः पायि। तिमा

* ऋ० वे० ६, ८, ८, ३।

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम् ।
१ ३ २ ३ २ ३ १ २
अध त्यन्तुर्वशं यदुम् ॥ २ * ॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोम-रसः अवाहन् । "इत्था धिये" सत्य-कर्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन् । [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुप-चर्यते ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १र २र ३ १ २
परिणो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।
१ २ ३ २ ३ १ २
क्षरा सहस्रिणीरिषः ॥ ३ ¶ ॥ ६

हे सोम ! "अश्ववित्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

* ऋ० वे० ७, १, १८, २ ।

† 'सद्यः—क्षणादेव'—इति वि० ।

‡ 'इत्था—इदानीम्'—इति वि० ।

¶ ऋ० वे० ७, १, १८, ३ ।

शता। देवेसःपी। तिमा२३। शाता। औयि। मटी। वा३४३ओ३४वा। षुवा। सर्वधाः। असायि। मा२दा२३४औहोवा। ए३। षुसर्वधाअसी२३४५॥८*॥[१]

॥ वैदन्वताद्यम्॥ पारौ। स्वानोगिरिष्ठाः। पवा रयिवे२३४सो। मोअचारा२त्॥(१) तूवाम्। विप्र स्त्वङ्कविः। मधूरप्रा२३४जा। तमन्धामासा२ः॥(२) तूवे। विश्वेसजोषसः। देवा२सा२३४ःपी। तिमाशा ता२। मदायिषूसा३। ईश्या३। वंधो२३४वा। आ ५सोद्धायि॥ ८ † ॥ [२]

॥ चतुर्थवैदन्वतम्॥ औ३होयि। इहाहायि। औरचो२३४वा। परायिस्वा२३४नो। गिरा२३४यिष्ठाः।

---

* ऊ० गा० ३प्र० २ख० ८सा०।

† ऊ० गा० ३प्र० २ख० ९सा०।

धनञ्च "परि क्षर"। अपिच "सहस्रिणीः" बहूनि* "इषः" अन्नानि क्षर॥

"परिस्रः"-"परिणः"—इति पाठौ॥ २॥ ६

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

२ १ २ ३ २उ ३ २ ३ १२
अपघ्नन्पवतेमृधोपसोमोअराव्णः।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्णः" सतो सत्यां धनानामदातृंश्च "अप" घ्नन्¶ "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २३ १र २र३१२ ३ १र २र
महोनोरायआभरपवमानजहीमृधः।
१ २ ३ २३१२
रास्वेन्दोवीरवद्यशः॥ २ §॥

---

* 'सहस्रिणीः—सहस्रसम्मिता इषः अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० मु० पु० पाठः।

‡ ऋ० आ० ६, १, ३, १४ (२भा० १९४०)=ऋ० वे० ७, १, २१५।

¶ अपेलुपसर्गे इयदर्शनात् घ्नन्नित्यस्यानुवृत्तिः।

§ ऋ० वे० ७, १, २३, १।

२ १ ५ १ ३ ५ १ २
पावित्रे२३४सो । सोम्रक्षा२३४रात् ॥(१) तुवंवा२३४यि

५ २ ३ ५ १ ३ ५ २ १
प्रः । तुवङ्का२३४वीः । मधुप्रा२३४जा । तमन्धा२३४

५ २ ३ ५ २ ३ ५ १२ ३
साः ॥(२) तुवेंवा२३४यिश्वे । सजोषा२३४साः । देवासा

५ २ ३ ५ १ ३ ५ २
२३४:पी । तिमाश्रा२३४ता । मदायिषू२३४सा । वंधा

३ ५ ५ २ १ २१२ १ १ ३
आ२३४सो । औ३होयि । इहाइहायि । औ२होर

२ १२ ११११
३४५वा६५६ । ए३ । उपा२३४५(३) ॥ १० * ॥ [३]

२ २ १ २२ १
॥ ऐध्मवाहाद्यम् ॥ परिस्तुवाइहा । नोगायि । रा

२ १ ५ ३ ५ १ २ २ २ ५ १ २
यिष्ठाओ२३४वा । ई२३४हा । पवित्रेसोमो३आ । हा

३ ५ ३ ५ २ १ २ १
रादो२३४वा । ई२३४हा ॥(१) तुवंविप्रइहा । तुवाम् ।

१ ३ ५ ३ ५ १ २ ५ १
कावाओ२३४वा । ई२३४हा । मधुप्रजाता३मा । धा

२ १ ५ ३ ५ २२ १ २ १
साओ२३४वा । ई२३४हा ॥(२) तुवेविश्वइहा । सजो ।

२ १ ५ ३ ५ २२ २ १
षासाओ२३४वा । ई२३४हा । देवासःपीतो३मा । श्रा

* ऊ० गा० १प्र० २आ० १०सा० ।

हे "पवमान !" "इन्दो" सोम ! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ १ ३ २ १ ३ ३ १ २
नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन् ।
१ २ ३ १ २ १ २
यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम ! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति । कदा ? इत्यत्राह—"यत्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीयसूक्ते—

प्रथमा ।

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अयापवस्वधारयाययासूर्यमरोचयः ।
३ १२ १२ ३ २
हिन्वानोमानुषीरपः ॥ १ ‖ ॥

---

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यच इति (६,३,१३५) तत्र दीर्घः ।

† ऋ० वे० ७, १, १३, २ ।

‡ 'राधः—धनस्य'—इति वि० ।

¶ 'ह्रुतः—हरणशीलाः'—इति वि० ।

§ 'मखस्यसे—यज्ञसमये यज्ञं त्वं यदा करोषि'—इति वि० ।

‖ छ० आ० ६, १, १, ७ ( १भा० ५०४० )=ऋ० वे० ७, १, ११, १ ।

२ १ ५ २ ५ २ १ २ १ ३
ताओ२३४वा । ई२३४चा । मदायि । षूसाओ२३४
५ २ ४ १ ७ ३
वा । ई२३४चा । वेधाः । वेधा२आ२३४५सा६५६यि ।
३ ५
ई२३४चा(३) ॥ ८ * ॥ [४]

१ २र १ २
॥ सत्त्वितम् ॥ परिस्रुवानः । गा२यिरिष्ठाः । पवा
१ २ १र १ २
२यि । त्रे२३सो । मोआ२श्चारात् । तुवंविप्रस्तु ।
१ २ १ २ १ १
वा२ःरकवायिः । मध२ । प्रा२३जा । तमा२न्धासाः ।
१ र २ र १ २र १ २ १
तुवेविश्वे स । जो२षसाः । देवा२ । सा२३ःपी । ति
१ २ १ ७ २
मा२श्माता । मा२३दायि । षू२सा । वेधा२३ः । हा
५
उवा३ । आ२३४सौ(३) ॥ ६ * ॥ [५]

२ १ २ १ २ १ २ १
॥ जराबोधीयम् ॥ परिस्रुवोवा । नोगिरिष्ठाः । पवा
२ र १ २ १ २ १ २
यित्रे२३सो । मोअश्चारात् ॥(१) तुवंविप्रोवा । तूवङ्क
२ १ २ १ २ र १
वायिः । मधूप्रा२३जा । तमन्धासाः ॥(१) तुवेविश्वो

* ऊ० गा० ८प्र० १ख० ८सा० ।
† ऊ० गा० ८प्र० १ख० ६सा० ।

हे सोम! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" चर॥ १॥

अथ द्वितीया।

१ २ ३ २३१२३ १ २ ३ १र १र
अयुक्तसूरएतशम्पवमानोमनावधि।
३ १ २ ३ १ १
अन्तरिक्षेणयातवे॥ २ *॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्म्मनुष्यस्तस्मिन् मनुष्यइत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् (निघ० १, १४, १०)] अश्वं "अयुक्त" युङ्क्ते॥ २॥

अथ तृतीया।

३ १उ ३ २ ३ २३१ २ ३ १ २
उतत्याहरितोरथेसूरोअयुक्तयातवे।
२ ३ २ ३ १ २ ३ २
इन्दुरिन्द्रइतिब्रुवन् †॥ ३ ‡॥ ८

"उत" अपि च "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

* ऋ० वे० ७, १, ३१, १।

† "ब्रुवम्"—इति ऋ० पु० पाठः।

‡ ऋ० वे० ७, १, १, १, ४।

२ १ र २ १ १ २र १ २ र १
वा। साजोषसाः। देवासा२३:पो। तिमाशाता। म

२ ४ ५र ३ २
दायिषू१सा२३वो। धाः। असो३४५ई। डा(३)॥१८*॥[६]

२ १ १ २र
॥सुरूपोत्तरम्॥ परिसुवौचो२। इया। नोगिरा

१ १र १ २र १
यिष्ठा२ः। पवित्रेसौचो२। इया। मोअत्तारा२त्॥(१)

२ १ २ १ १
तुवंविप्रौचो२। इया। तुवङ्कावा२यिः। मधुप्रजौहो२।

१ २ १ २र १ १ २
इया। तमन्धासा२ः॥(२) तुवेविश्वौहो२। इया। स

र १ र र १ १ २र १
जोषासा२ः। देवासःपौहो२। इया। तिमाशाता२।

र१ १ २१र २ १
मदेषुसौचो२। इया। वंधाआ२३सा३४३यि। औ२३

४५ई। डा(३)॥ ३† ॥[७]

२र र २ र
॥हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। प

१र २ १ २ ३ ५ २र
वित्रेसो३। मोअत्ता२३४रात्॥(१) हाउतुवंविप्रस्तुव

१ २ १ २ ३ ५ २र
ङ्कविर्हाउ। मधुप्रजा३। तामन्धा२३४साः॥(२) हाउ

---

* ऊ० गा० १२प्र०१ अ० १८सा० ।

† ऊ० गा० १४प्र० १अ० १३सा० ।

तान् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति*॥

"रथे"-"दश"—इति पाठौ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठे खण्डे ‡—

अग्निंवइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ १२ ३ १ २ ३ २ ३
अग्निंवोदेवमग्निभिःसजोषा

१ २ ३ १ २ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम् ।

१र २ ३ १ २ ३ १ २ ३
योमर्त्त्येषुनिध्रुविर्ऋतावा

१ २ ३ १ २ ३ २
तपुर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य चाह्वानं क्रियते तदा सूर्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि० ।

† 'उक्तं वहिष्पवमानम्'—इति वि० ।

‡ 'इदानीमाज्यानि'—इति वि० ।

¶ य० वे० १५, ६१=ऋ० वे० ५, २, ३, १ ।

र र र र २र १र २ १ २ ३
तुवेविश्वेसजोषसोहाउ। देवासःपो३। तायिमाशा२

५ २ १ २ २ १र
३४ता। ऐ२हो१आ२३यिहो। मदायिषू३सा। वंधाः।

२ ५र र २ १ ३ १ १ १ १
आ२सा२३४औहोवा। हविष्मते२३४५(३)॥ ८ * ॥ [८]

३ ४ ५ र र २ ३ ५
॥ आग्नदम्॥ परिसुवानऐ। हौऐहो २ ३ ४ या।

१ १ ऽ २ १ र र र १
गिरिष्ठाऐ२होऐ२हो३या। पवित्रे सोमोअक्षरदै२होऐ

ऽ २ ३ ४ ५ र २ ३ ५ १
२हो३या॥(१) तुवंविप्रस्तुऐ। होऐहो२३४या। वह्नि

१ ऽ २ १ र १ २
विरै२होऐ२हो३या। मधुप्रजातमन्धसऐ२हो३या॥(२)

१४र ५ र र २ ३ ५ १र ऽ २
तुवेविश्वेसऐ। होऐहो२३४या। जोषसऐ२हो३या।

१र र र र १ ऽ २ १ २
देवासःपीतिमाशतऐ२होऐ२हो३या। मादायिषुसा३१

२ १ ५ ४
२३। वंधो२३४वा। आपुसो६हायि(३)॥ ९ † ॥ [९]

---

* ऊ० गा० १५प्र० १ख० ८सा०।

† ऊ० गा० १५प्र० १ख० ९सा०।

हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत। कीदृशम्? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् [ द्वितीयार्थे प्रथमा ( ३, १, ८५ ) ] "यजिष्ठ" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्त्येषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया।

२ ३२३ १र २र ३ २
प्रोथदश्वोनयवसेविष्यन्

३१ २ ३२ ३१२३ १ २
यदामहःसंवरणाद्व्यस्थात्।

१ २ ३ २ ३ १२ ३ १र
आदस्यवातोअनुवातिशोचि

१२र ३ १ २ ३ १ २
रधस्मतेव्रजनङ्कृष्णमस्ति ॥ २ ‡ ॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

---

* 'यजिष्ठं'—यजनीयम्'—इति वि०।

† 'तपुः—तापनशीलः, मूर्द्धा—प्रधानभूतः'—इति वि०।

‡ ऋ० वे० ५, १, ३, १।

¶ 'यवसे—सन्निधानभूते। अथवा द्वितीयार्थे सप्तमी। यवसभमविष्यन् भक्षयन्'—इति वि०।

२ १ ४र र ५
॥ दावसुनिधनम् ॥ परिस्रुवा२३नोगिरिष्ठाहाउ ।

१ १र र र १ २ १ १ १
प।वित्रे सो। मोआक्षा१रा२३त्। होवा३हायि ॥(१)

१ ४ ५ १ १र १ २
तुवंवा२३यिप्रस्तुवङ्कविर्हाउ। माधुप्रजा। तमान्धा१

१ २ २ २ १र ४र र
सा२३ः। होवा३हायि ॥(२) तुवेवा२३यिश्वे सजोहाउ।

१ र२ र १ र १ २ २ १
दायिवासःपी। तिमाम्रा१ता२३। होवा३हायि। म

२ १ २ २ १र ३
दायिषू१सा२३। होवा३हा। वंधाः। आ२सा२३४

५र र २ २र १ ३ १ १ १ १
औहोवा। ए३। दावम्२३४५(३) ॥ १० * ॥[१०]

१ १र
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्रुवानः। गा२यिरि

१ १र र र १ ७ ५र १
ष्ठाः। पावित्रे सो। मोआक्षरा२३४त्। हाहोयि ॥(१)

१ २ १ १र १ ७
तुवविप्रस्तु। वा२ङ्कवायिः। माधुप्रजा। तमान्धसा

५र २ १र१र १
२३४ः। हाहोयिं ॥(२) तुवेविश्व स। जो२यसाः। दा

---

* ऊ० गा० १५प्र० १ख० १०गा०।

णात्” निरोधात् दावरूपोऽग्निः “यदा” “व्यस्थात्” संवृतेषु वृक्षेषु वितिष्ठते, “आत्” तदा “अस्य” अग्नेः “शोचिः” अर्चिः “अनु वातः वाति”। अथ प्रत्यक्षस्तुतिः—“अध” अथानन्तरं हे अग्ने !, “ते” तव “व्रजनं” वर्त्म “कृष्णमस्ति”। “स्म”—इति पूरणम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १ २ ३ १उ
उद्यस्यतेनवजातस्यवृष्णो-
३ १ २ ३ १ २ ३ २
ऽग्नेचरन्त्यजराइधानाः ।
२ ३ १ २ ३ २ ३ १ २ ३
अच्छाद्यामरुषोधूमएषि
२ ३ १ २ ३ १ २ ३ २ ३ १
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ८

हे “अग्ने !” “नवजातस्य” नूतन-प्रादुर्भूतस्य “वृष्णः” वर्षितुः “यस्य” “ते” तव “अजराः” जरा-रहिता ज्वाला “इधानाः” इध्यमाना या “उच्चरन्ति” उत्क्रामन्ति । हे “अग्ने !” “अरुषः” आरोचमानः “धूमः” धूमयुक्तः “दूतः” त्वं “द्यामच्छ”† द्युलोकं प्रति “समेषि” सम्यग् गच्छसि, पश्चात् तत्रत्यान् “देवान्” इन्द्रादीन् “ईयसे हि” प्राप्नोषि खलु, [ यद्वा, हे

* ऋ० वे० ५, १, ३, ३ ।

† ‘अच्छ—आप्तुम्’—इति वि० । संहितायाम् “अच्छा”—इति दीर्घान्त श्रूयते, तत्र निपातस्य चेति दीर्घः ।

र २ र १ ७ ३र २ १र २
यिवासःपो। तिमाशता२३४। हाहोयि। मदेषुसार्वा

२ १ २ ४ ५ ४ ५
३धाः। असा। औ३होवा। ई्डा(३)॥ ११ *॥[११]

२ र र र र १ २
॥ हाविष्कृतम्॥ परिस्रुवानोगाहाउरायिष्ठाः। प

१ र र २ र
वित्रेसो। मोआहा२३रात्॥(१) तुवंविप्रस्तुवहाउ

१ २ १ २ २ र
कावायिः। मधुप्रजा। तमन्धा२३साः॥(२) तुवेविं

र र र १ २ र१र र २
श्वेसजोहाउषासाः। देवासःपायि। तिमाशा२३ता।

१ २ १र ३ ५र
मदा२होश्यि। षू२३सा। वंधाः। आ२सा२ ३ ४ औ

र २ १ ३ १ १ १ २
होवा। हविष्कृते२३४५(३)॥ १२ †॥ [१२]

१ २र १र र र २
॥ गौषूक्तम्॥ परिस्रुवानोगौ। हौहोवाहायि। रि

१ ० र र २ १ १
ष्ठाः। पवित्रेसोमऔ२। ऊवायि। ऊवा२यि। हा

१ २ १र र २ २
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

* ऊ० गा० १५प्र० १अ० ११सा०।

† ऊ० गा० १५प्र० १अ० १२सा०।

अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुष-व्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ ९

अथ तमिन्द्रमिति तृचात्मकं द्वितीयं सूक्तम्॥*

तत्र प्रथमा ।

१र २र ३ २३ १ २ ३ १ १
तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।

१ २र ३ १ २
सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्र" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति (३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

* 'मैत्रावरुणसाम'—इति वि० ।

† ऋ० आ० २, १, ३, ५ ( १भा० .२९९४० )=ऋ० वे० ६, ६, १९, १ ।

२ र १    १    १
मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धामा२ः ॥(२)

१२१ २ १ र    र    १    १    २ र    र
तुवेविश्वे सजौ। चौद्दोवाद्दायि। धसाः। देवासःपी

२    १    १    १ र
तिमौ२। ऊवायि। ऊवा२यि। आता२। मदेषुस

२    १    १    १ र
वंधौ२। ऊवायि। ऊवा२यि। आता२। मदेषुस

२    १    १    १
वंधौ२। ऊवायि। ऊवा२यि। आसा२३यि। द्दो

३    ५र र    २ १र २ ३ १११
२वा२३४औद्दोवा। अग्निराऊता२३४५ः(३) ॥ ७* ॥[१३]१७

ससुन्वे—इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १र २र३ २ ३ १ २ १ १र २र
ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।
२ ३ १ २    ३ २
सोमोयस्सुक्षितीनाम् ॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

* ऊ० गा० १,प्र० २खा० ७सा०।
† ऋ० आ० ६, २, ४, ५ ( २भा० २३३पृ० )=ऋ० वे० ७, ५, १८, २।

अथ द्वितीया ।

२ ३ १२ २२ ३ १२ २२ ३ १२ २२ ३ २
इन्द्रःसदामनेकृतओजिष्ठःसबलेहितः ।
३ १ ३ २उ ३ २
द्युम्नीश्लोकीससोम्यः ॥ २ * ॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः । किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः । "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्केनोक्तत्वात्] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡ ॥

"बले"-"मदे"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २उ ३ १२ २२ ३ १ २ ३ १ २
गिरावज्रोनसम्भृतःसबलोअनपच्युतः ।
३ २ ३ १२ २२
ववक्षउग्रोअस्तृतः ॥ ३ ¶ ॥ १०

* ऋ० वे० ६, ६, २२, ३ ।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽसिमयो गीयते सः श्लोकी'—इति वि० ।

‡ 'सोमैर्यः सम्बध्यते स सोम्यः'—इति वि० । "सोममर्हति यः"—इति पा० ४, ४, १३७ ।

¶ ऋ० वे० ६, ६, २९, ४ ।

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ ३ १ २
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः ।
१ २र ३ १र २र ३ १ २ ३ २ ३ १ १ २ ३ २
आयेनमित्रावरुणाकरामहएन्द्रमवमेमहे ॥ २ ॥ १८

हे सोम ! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने ( भ्वा० प० ), लेटयड़ागमः ] "यस्य" यञ्च सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे । तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वामभिषुणोमीत्यर्थः ॥ २ ॥ १८

१ १ १र र २ १
॥ दीर्घम् ॥ सास् । स्वेयोवस्२३नाम् । योरा२
१ रर १ २ १ २ १ २
याम२ । नेतायइडा२३नाम् । सो२३माः । यःसुचि

---

* ऋ० वे० ७, ५, १९, ४ ।

† सुपांसुलुगित्याकारे ( ७, १, ३९ ) रूपम् ।

‡ "भगो व्याख्यातः ( ३, १६ ) । तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * * । अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४ ।

"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रेण" वज्रम् आयुधं तत्कर्त्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्मात् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति॥

"उग्रः"-"ऋष्वः"—इति पाठौ॥ ३॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः* ॥ ६ ॥

---

अथ सप्तम-खण्डे†—

अध्वर्योअद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्,‡

तत्र प्रथमा¶॥ ॥

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
अध्वर्योअद्रिभिःसुतꣳसोमम्पवित्रआनय।

३ १ २ ३ १ २
पुनाहीन्द्रायपातवे॥ १ ¶ ॥

---

* 'इन्द्र आग्नाम मोहदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोऽयम स्तीति तदभिप्रायः। [illegible] तदिहैव द्वितीये( ९,१, ९,१ = ३भा० ३११पृ० )प्रपाठके।

† 'उक्तान्याख्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'गायत्रप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ ऋ० आ० ६, १, २, ३ ( २ भा० ५७पृ० )=ऋ० दे० ७, १, ८, १।

१ ५ ५ ११ १
तार३४यिनो६हायि ॥(१) सोमाः । यःसुत्तितार ३ यि
२ १ १ र १ १ १
नाम्। यास्वा२ताई२। द्रःपिबाद्यस्यमरु२३ताः। या
१ र १ १ १ र
स्वा२ताई२। द्रःपिबाद्यस्यमरु२३ताः। यार ३ स्वा।
१र २ १र ५ ५ १ २ १र र
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्वा। वार्यमणा
२ १ १ १र र २ १र २
भा२३गाः। आये२नामो२। त्रावरुणाकरामा२३हा
१ १ र र १र २ १
यि। आये२नामो२। त्रावरुणाकरामा२३हायि। आ
२ १ १र१ ५ ५
२३यिन्द्राम्। अवसेमा२३४हो६हायि(३)॥ ११* ॥ [१]

२१ २ ४ २ २ ५ २र १
॥ सफम्॥ समुन्वे३यः। वासू२३४नाम्। योरा
र १ २ २ २ ५ २र
या२म्। आनायिता३या३ः। इडा३२३ ४ नाम्। सो
१ २ ४ २ ५
नाः। याःसू३स्वो३। ता३४५यिनो६हायि(१) ॥१४†॥[२]१८

---

* ऊ० गा० ३प्र० १ष० ११सा०।

† ऊ० गा० ११प्र० १ष० १४सा०।

हे "अध्वर्यो !" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति— "इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय ॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि" "पुनीहि"—इति च ॥ १ ॥

अथ द्वितीया।

१२१२ ३ १२ १२उ कर २र
तवत्यइन्दोअन्धसोदेवामधोर्व्याशत।
१२ २ १ २
पवमानस्यमरुतः ॥ २ * ॥

हे "इन्दो" सोम ! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी (२, १, २५)] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च"† एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः ॥

"व्याशत"-व्यश्नुत"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ १ ३ १ २ ३ १उ ३ १ २ ३ १ २
दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।
१२ ३ १ २
सुनोतामधुमत्तमम् ॥ ३ ‡ ॥ ११

---

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।

तंवइति-ऋचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा ।

१ २   ३ १ २   ३ २ ३ १ २
तंवःसखायोमदायपुनानमभिगायत ।
२ ३ १ २ ३ १ २   ३ १ २
शिशुंनहव्यैःस्वदयन्तगूर्त्तिभिः ॥ १ * ॥

हे "सखायः" ऋत्विजः ! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत । "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः क्षीरादिभिश्च स्वादूकुर्वन्ति, तद्वत् "हव्यैः" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुतिभिश्च "स्वदयन्त" स्वादूकुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ २   ३ १ २
संवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते ।
३ १२ १२ ३ २ ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः ॥ २ † ॥

"हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡ । तत्र दृष्टान्तः—"वत्स-

---

* छ० आ० ६, २, ३, ४ ( २भा० २०८पृ० ) = ऋ०, वे० ७, ५, ८, १ ।

† ऋ० वे० ७, ५. ८, २ ।

‡ 'इन्दुः हिन्वानः याच्यमानः, अज्यते अज्ञ वपसे मनीषिभिः'—इति वि० ।

हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥ ११

॥ वैरूपम्† ॥ अध्वर्य्यो२३४आ । द्रिभायिःसू३ता३म् ।
सोमांपा२३४वी । त्रा आ१नाया२ । पुना२३ । हौन्द्रा३४
औहोवा । यपात्तवे२३४५ ॥(१) तवत्या२३४इ । दो
आन्धा३सा३ः । देवा२मा२३४धोः । वाया१शाता२ ।
पवा२३ । माना३४औहोवा । स्पमरुता२ ३ ४ ५ः ॥(२)
दिवःपी२३४यू । षमुत्ता३मा३म् । सोमा२मा२३४इन्द्रा ।
यावज्रायिणा२यि । सुनो२३ । तामा३४औहोवा ।
धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता" —इत्याकारान्तं श्रूयते, तच्च द्व्यचोतइत्येतस्मात्तिङइति (६, ३, १३५) योगविभागाद्दीर्घः ।

† "गायत्री वैरूपम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ४प्र० १ख० २०सा० ।

इव" वत्सो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [ भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति सुडागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम् ॥ २ ॥

अथ तृतीया।

२ १र २र ३ १ २ ३१र २र ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ १ २ १ २ ३ १
अयन्देवेभ्योमधुमत्तरःसुतः॥ ३ † ॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा ॥ ३ ॥ १९

२ २ ५ २
॥ कार्णश्रवसम् ॥ तां२३४वः। सा२३४खा। सा२

५ २र १ २ १र १ र २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, १।

॥ आभ्रुभार्गवम्॥ अध्वर्य्यो अद्रि। भिःसू३ताम्।
सोमम्पवा३यि। त्वाआ२ना२३४या। पुनाह्वा१यिन्द्रा
२। यपा३। ता२३४वो६हायि॥(१) तवत्यइन्दो। अ
न्धा३साः। दायिवामधो३ः। वाया२म्ना२३४ता। पवा
मा१ना२। स्यमा३। ह्र२३४तो६हायि॥(२) दिवःपी
यूषम्। उत्ता३माम्। सोममिन्द्रा३। यावा२आ२३
४यिणायि। सुनोता१मा२। धुमा३। ता२३४मो६
हायि(३)॥१*॥[२]

॥मार्गीयवम्†॥ अध्वौहोवा। र्य्यो आ२। द्रिभा
यिःसू२३४ताम्। सोमम्पवि। त्वआना१या२। पुना।
हा। औ३होयि। हो२३४न्द्रा। या२पा२३४औहोवा।
ए३। तवे२३४५॥(१) तवौहोवा। त्या आ२यि। दो

* ऊ० गा० ४प्र० २ख० १सा०।
† "मार्गीयवाद्यम्"—इति ख० पु० पाठः।

१ २ १ २ ३र २ १ १२र २
श्रायिप्तुन्नह । व्यःस्वदया२३ । तगूर्त्तिभा३४३यिः ॥(१)
३ ५ ३ ५ ११र २ १
सा२३४व । त्मा२३४ई । वमातृ२३भायिः । श्रायिन्दु
२ र र १ २ १ २र१र १र ३ १
र्त्विन्वा । नोश्रज्या२३तायि । दायिवावीर्मा । दोमति
१ २ ३ १ ३ ५ ३
भा२३यिः । परिष्कृता३४३ः ॥(२) श्रा२३४यम् । दा२३
५ २१र १ १ २ र १र २
४सा । यसाधा२३नाः । श्रायछ्मङ्गां । यवीता३२या
१ २र१र २र ३ २ १ १ २ २ १
यि । श्रायन्देवे । भ्योमधुमाधतरःसुता३४३ः । श्रो२३
४५ई । डा(३) ॥ १२ * ॥ [१]

२ र १र १र १
॥ सुज्ञानम् ॥ तंवःसखा । योमदाया । पुनाना]
र १ २ १ र १
मा२ । भिगायता । श्रिप्तुन्नाद्वाद्वा२ । व्यैःस्व । दा
५र र १र २ १ १११११
२या२३४औह्वोवा । तगूर्त्तिभिरे३उपा२३४५(१) ॥१० † ॥[२

* ऊ० गा० ३प्र० २अ० १२सा० ।

† ऊ० गा० ८प्र० १अ० १०सा० ।

२ ३ ५ १र र २ र १ २ १र
अन्धा२३४सः । देवामधोः । वियाशा१ता२ । पवा।

२ २ ३ ५ १ ३ ५र र
हा । औ३होयि । मा२३४ना । स्या२मा२३४औहो

२ १ १११ र १ २ १
वा । ए३ । हूता२३४५ः ॥(२) दिवौहोवा । पीयू२।

३ २ ३ ५ १र र र १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्रा१यिणा२यि ।

१र २ २ ३ ५ १ २
सुनो । हा । औ३होयि । ता२३४मा । धू२मा२३४

५र र २ १ ११११
औहोवा । ए३तमा२३४५म् (३) ॥ २ * ॥ [३]

२ र २ १र
॥ सौमित्रम् ॥ अध्वर्योअद्रिभिः सुता३मे । सोम

२ र २ १ २ र
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । होन्द्रा

१ ४ ५ ४ ५ २ र
२ओ२३ । यपोवा । ता५ ।६हायि ॥(१) तवत्यइन्दो

२ १र र २ र २
अन्धसा३ए । देवामधोर्वि । आ२१२३ । श्राता ३ ४ ३ ।

१ २ र १ ४ ५ ४ ५
पा२३वा । माना२ओ२३ । स्यसोवा । हू५तो६हा

२ र र २ १र २२
यि ॥(२) दिवःपीयूषमुत्तमा३मे । सोममिन्द्राय । वा

* ऊ० गा० ४प्र० १ख० २सा० ।

५ र १ १

॥ काश्यीतम् ॥ तंवःसखा। योमदा२३या३४। पु

र १र १ १ र

नानमा। भिगाया२३ता३४। शिश्चुन्नहा। व्यैःसूदयन्त

१र १ ५र र ७

गू। तां२यि। भा२३४। औहोवा। ऊ२३४

५

पा(१)॥ ११ * ॥ [३] १९

सोमाःपवन्तइति-त्र्यृचात्मकं चतुर्थं सूक्तम् ;

तत्र, प्रथमा।

१ २ ३१२३ १२ ३१२

सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।

१२ ३१ १३१ २ ३र ३र ३१२

मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः॥ १ † ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा॥ १ ॥

---

* ऊ० गा० ८प्र० १ख० ११गा० १।

† ऋ० सा० ६, २, १, ४=( २भा० १५९ पृ० )—ऋ० वे० ७, ५, १, ५।

२ १ २ र १
२१२३। जिणा३४३यि। सूर३नो। तामार्२ओ२३।
४ ५ ४ ५
धुमोवा। ता५मोई्हायि(३) ॥ ३ * ॥ [४]

१ २ १ २ ०
॥ ऐटतम् ॥ अध्व। एआध्वा। योंअद्रि। भा३
१ ३ ५र र ० ५ २र
यिः। द्रा२यिभा२३४औहोवा। मू२३४ताम्। सोमा
३ ५ ३ २ १ ३ ५र र ३
म्या२३४वी। चआ३। चा२आ२३४औहोवा। ना२३
५ २ ३ ५ ३ २ १ ३ ५र
४या। पुनाहा२३४यिन्द्रा। यपा३। या२पा२३४औ
र ३ ५ १ २ १ २ र
होवा। तौं२३४वे ॥ (१) तव। एतावा। त्यइन्दो। आ३।
१ ३ ५र र ३ ५ २र ३ ५
दो२आ२३४औहोवा। धा२३४माः। देवामा२३४धोः।
३ २ १ ३ ५र र ३ ५ २ ३
विया३। वा२या२३४औहोवा। शा२३४ता। पवामा
५ ३ २ १ ३ ५र र २
२३४ना। स्यमा३। स्या२मा२३४औहोवा। रू२३४
५ १ २ १ २ र र १
ताः ॥(२) दिवः। एदायिवाः। पीयूषम्। ऊ३। षा
२ ५र र ३ ५ २र ३ ५
२मू२३४औहोवा। ता२३४माम्। सोमामा२३४यिन्द्रा।

* ऊ० गा० ४प्र० २ख० ३सा०।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते ॥ २ * ॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्य्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ १ २ ३ १र २र३ २
सुषाणासोव्यद्रिभिश्चितानागोरधित्वचि ।
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ ३ ‡ ॥ २०

"गोः" अनुडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

---

* ऋ० वे० ७, ५, ३, १ ।

† 'दर्शतासः—सर्वस्य द्रष्टारः'—इति वि० ।

‡ ऋ० वे० ७, ५, ३, २ ।

यवा३ । या२वा२३४औहोवा । औ२३४णो । सुनोता
२३४मा । धुमा ३ । धू२मा२३४औहोवा । ता २ ३ ४
माम्(३) ॥ ४ * ॥ [५]

॥ धुरासाकमश्वम् ॥ अध्वर्य्योआ३ । हौ३हो३१ । द्रि
भिःसुता३म् । हौ३हो३१यि । सोमम्पवा३यि । हौ३
हो३१ । नआनया३ । हौ३हो३१यि । पुनाहीन्द्रा ३ ।
हौ३हो३१ । यपातवा३यि । हौ३हो३१२३४५ई । डा ॥(१)
तवत्यआ३ । हौ३हो३१ । दोअन्धसा३ः । हौ३हो३१
यि । देवामधो३ः । हौ३हो३१यि । वियाशता३ । हौ
३हो३१यि । पवमाना३ । हौ३हो३१ । स्यमरुता:३ ।
हौ३हो३१२३४५ई । डा ॥(२) दिवःपीयू३ । हौ३हो३
१ । षमुत्तमा३म् । हौ३हो ३ १ यि । सोममिन्द्रा ३ ।

* ऊ० गा० ४प्र० २ख० ४सा० ।

"इषम्" अन्नम् अभितः "समस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र  ३ २  ४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।

१ र १ १ र र २ ४
अस्मभ्यङ्गातुवित्तमा२३ः । मायिताःस्वाना३१२३ः । अ

१ र २ ४ ५
रे५पसाः । सूवाधिया३१२३ः । सुवोवा । वा५यिदोई

५ ५र र ३र २ ४ ५ १र र र
हायि ॥(१ तेपू । तासो३ । विपश्चिताः । सोमासो

र १ र र १ ४ र १
दध्याशिरा२३ः । सूरासोना३१२३ । दशा५तासाः । जा

२ ४ ५ ४ ५
यिगत्नवा ३ १ २ ३ः । धुवोवा । वा५र्त्तो६हायि ॥(२)

५ र ३र १ ४ ५ १ र र र
सुषा । णासो३ । वियद्भिभायिः । चितानागोरधित्व

१ २ ४ १
चा२३यि । आयिषमस्मा३१२३ । भ्यमा५भिताः । सा

४ ४
मस्वरा३१२३न् । वसोवा । वा५यिदोई हायि(३) ॥ १ ३‡॥[१]

---

* 'समस्वरन्— उन्मादयन्'—इति वि० ।

† "महागौरीवितम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ४प्र० २अ० १९सा० ।

हौ३हो३१ । यवज्रिणा३यि । हौ३हो३१यि । सुनोतामा
३ । हौ३हो३१ । धुमत्तमा३म् । हौ३हो३१२३४५ई ।
डा(३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्यो अद्रिभिःसुतम् । ईय
इयाहायि । सोमम्पवित्रआ । हा३हा३यि । ना२३४
या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा
तवे२३४५ ॥(१) तवत्यइन्दोअन्धसः । ईयईयाहायि ।
देवामधोर्विया । हा३हा३यि । आ२३४ता । पावा३
उवा३ । मा२ना२३४औहोवा । स्यमरुता२३४५ः ॥(२)
दिवःपीयूषमुत्तमम् । ईयइयाहायि । सोममिन्द्रायवा ।
हा३हा३ । ज्रा२३४यिणायि । सूना३उवा३ । ता२मा
२३४औहोवा । धमत्तमा२३४५म् (३) ॥ ६ † ॥ [७]

* ऊ० गा० ४प्र० २ख० ५मा० ।

† ऊ० गा० ४प्र० २ख० ६मा० ।

२र र २
॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
र५ १ १ २ २ ५ २ २ १
भ्यङ्गा३तूवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
र र र५ १र १ २ २ ५ १
२। मित्रास्वाना३आरेपसा३ः। हा३हा। औ३हो
२ १ र र २ २ २ ५
३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ
२ २ १ १ ४ ३ ५र र
३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो
२ रर र र २ र र र १ र
वा॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ
२ २ २ ५ २ २ १ र
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
र र १ र २ २ २ ५ २ २ १
रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ
१ २ २ २ ५ २ २
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
१ १र ३ ५र र २
आयिही२। ध्रुवाः। धा२र्त्ता२३४औहोवा॥(२) सु
र र र २ र र र५१ १
षाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।
२ २ ५ २ २ १ १
हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

२　१ २　१　२　३
॥ सौपर्णम्* ॥ अध्वर्य्य ओवा। द्रायिभायिःसू२३४

५　२र १ २ १　७　३　५　१　१
ताम्। सोमामवायि। चआ२ना२३४या। पू२ना।

२　१ २र　१　२　४ ५　२
हा२३यिन्द्रा। यापातवा। औ३होवा ॥(१) तवत्य

१ २　१ २ ३　५　२र १ २ १　७　३
ओवा। दो अन्धा२३४साः। देवामधाः। विया२शा

५　१　१　२　१ २ १　२
२३४ता। पा२वा। मा२३ना। स्यामरुता। औ३

४ ५　२ र १ २　१ २ ३　६　२र
होवा ॥(२) दिवःपीयोवा। षामुत्ता२३४माम्। सो

१ २ १　७　३　५　१　१
मामिन्द्रा। यवा२ज्रा२३४यिणायि। मू२नो। ता२३

२　१ २ १　४ ५　४
मा। धूमत्तमाम्। औ२३होवा। हो ५ ई। डा(३)

॥ १३ † ॥ [८]

१ २र १ २ १　१
॥ रोहितकुलीयोत्तरम्॥ अध्वर्य्याअद्रिभायिः। सु

१र　२ १र　१　१　१
ता२म्। सोमम्पवित्रआना२३या। पूना२हायिन्द्रा२१।

२ १　५　४　५　१ २ १　२र १
यपो२ ३ ४ वा। ता५वो६हायि ॥(१) तवत्यइन्दोआ।

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऊ० गा० १६प्र० २ अ० १३सा०।

२ २ २ ५ २ २ १
मभिताइः। हा ३ हा। औ३हो ३ वा। आयिही२ ।
१ २ १ २ ५ १ १ १
सामस्वरा३न्। हा३हायि। औ३हो३वा। आयिही
१ ३ ५र र २ १ ३१११
२। वसु। वा२यिदा२३४औहोवा। मधुश्च्युता२३४
१
५ः(३) ॥ १४ * ॥ [२]

२र १ २ ५
॥ वाङ्निधनङ्कौत्सम् ॥ सोमाःपावा३१२३४। तइ।
३ २ २ १ १ २ ५ ३ १ ३ १
द्वा३। अस्मभ्यङ्गा३१२३४। तुवि। तमा३ः। मित्रा
२ ५ र ३ २ ११ १
स्वाना३१२३४ः। अरे। पसा३ः। सुवाधीया३१२३ः।
४ २र १ १ ५ ३ २
सुवा५र्विदा३॥(१) तेपूतासो३१२३४। विपः। चिता
२र १र र २ ५र ३ २ २र १
३ः। सोमासोदा३१२३४। धिया। शिरा३ः। सूरासो
२ ५ ३र २ २ १ २
ना३१२३४। दर्श। तासा३ः। जिगात्नावा३ १ २ ३ः।
४ २ १ २ ५ ३ २
ध्रुवा५घृता३॥(२) सुषाणासो३१२३४। वियं। द्रिभा
३१र र २ ५ ३ २ २ १
३यिः। चितानागो३१२३४ः। अधि। त्वचा३यि। वृषा

* क० गा० ३प्र० १ख० १४गा० ।

१ । १र र र २ १र २ १ १
धर्ता २ः । देवामधोर्वियाशा२३ना । पावा २माना२३ ॥

२ १ ५ ४ ५ २ १ २र १र २ १ २
स्यमो२३४वा । ह्र५तो६हायि ॥ (२) द्रिवःपीयूषम् । त

१र र २ १ २ १ १
मा २म् । सोममिन्द्रायवज्रा२३यिणायि । सूनो २तामा

२ १ ५ ४ ५
२३ । धुमो२३४वा । ता५मो६हायि (३) ॥ १४ * ॥ [९] ११

धर्त्तादिवइति तृचात्मकं द्वितीयं सूक्तम् ।†

तत्र प्रथमा ।

३ २ ३ २ ३ १ २ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।

१ २ २ १२३ ३ १र २र ३
हरिःसृजानोअत्योनसत्वभि

२ ३ १ २ ३ २
र्वृथापाजांसिकृणुषेनदीष्वा ॥ १ ‡ ॥

---

* ऊ० गा० १६प्र० १ख० १४सा० ।

† 'अभिसोमासआयवइति बृहत्यः, धर्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि० । यथा पूर्वमभिसोमासइति (२, १, ९, १=३भा० ४०१पृ० ) तथैवात्र धर्त्तादिवइति भावः ।

‡ ऋ० सा० ६, २, २, ५ (२भा० १८२पृ० )=ऋ० मं० ९, ८, १, १ ।

२ ५ २ २ १ १ २
मास्मा३१२३४। भ्यम। भिता३ः। समास्वारा३१२३
४
न्। वमूपुविदाउ(३) ॥ १५ * ॥ [३]

५र २ ३२२ ४ ५ २ १ २ १
॥ ऐडकौत्सम् ॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा।
२ ३२१ २, ३ ५ २र १र २र१२ १ १
तुवित्तमाः। मायित्राओ२३४वा। स्वानाअरेपसा २ ३
११ २र २१ २१ २ ५र२२र२र
४ ५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः ॥(१)तेपूतासो
३४ ५ २र१२र १ १२र २ १ ३ २
विपश्चिताः। सोमासोदा। धियाशिराः। च्चरा‌ओ२३
५ २र १२ १र २ १११ ३ २ १ १ १र
४वा। सोनदर्शतासा२३४५ः। जिगत्नवाः। ध्रुवाघा
२ ५ र २र२र ३ ४ ५ २ १
२३र्ता३४३यि ॥(२) सुष्वाणासोवियद्रिभायिः। चिता
२र १ २ ३२१ २ ३ ५ २ १
नागोः। अधित्वचायि। आयिषाओ२३४वा। अस्म
२ १२१११ २ २ १ २१ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।
१
ओ२३४५ई। ई। डा(३) ॥ १६ † ॥ ४]

३र २ २ ४ ५ ५ २
॥ श्यावाश्वम् ॥ सोमा३१ः। पां३व। तइ। दा३

* ज० गा० ३प्र० २ख० १५गा०।

† ज० गा० ३प्र० २ख० १६गा०।

"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "कृत्व्यः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [ यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय ]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्व इव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे"-"कृणुते"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ७ १ २ ३
शूरो नधत्त आयुधा गभस्त्योः

२ १ १ ३ १२ २२
स्वाऽ३ःसिषासन्रथिरो गविष्टिषु।

१ १ २ १ २ ३ १ २ ३ २ ३
इन्द्रस्य शुष्ममीरयन्नपस्युभि

१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानो अज्यते मनीषिभिः॥ २ * ॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

* ऋ० वे० ७, ३, १, २।

५ १ र २ १
वः। एहिया। आ। स्वभ्यङ्गातू। वि। तमा२ः।
१र र १र २ ४ ५ १र
एहिया२। मित्रास्त्वानाआ३रे३। पा२३४साः। ऐ
१र र १ २ ४ २
हा२यि। एहिया२। सुवाधियाःमू३वा३ः। वा३४५यि
५ १र१ २ ४ऽ ५ २
दो६हायि॥(१) तेपू३१। ता ३ सो। विपः। चा ३
४ ५ १ र र ःर
यितः। एहिया। सो। मामोदधायि। आ।
१ १र र र १र २ ४ ५
गिरा२ः। एहिया२। सूरासोनादा३र्गो३। ता२३४साः।
२र १र १ २ ४ २
ऐहा२यि। एहि या२। जिगत्नवोभ्रू३वा३ः। घा ३
५ २ २ २ ४ऽ ५
४ ५ त्तो६हायि ॥(२) सुषा३१। णा३सो। विप।
२ ४ ५ १ र र र २ १
द्रा३यिभिः। एहिया। चायि। तानागोरा। धि। त्वचा
१र १ २ ४ ५
२यि। एहिया२। दूषमस्माभ्या३मा३। भा२३४यिताः।
२र १र १ २ २
ऐहा२यि। एहिया२। समस्वरान्वा ३ ह ३। वा ३
५
४ ५ यिदो ६ हा यिं(३) ॥ १६ * ॥ [५]

* ऊ० गा० १५प्र० २ख० १६सू०।

"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथादिन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमानोद्यहं गो-सम्भजनाय रथवानित्यर्थः ! "इन्द्रस्य" "शुष्मं" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया ।

१ २    ३ १ २    ३ १ २

इन्द्रस्यसोमपवमानऊर्मिणा

३ १ २    ३ १ ३ १    २

तविष्यमाणोजठरेष्वाविश ।

१ २    ३ २ ३ २ ३ १ २

प्रनःपिन्वविद्युदभ्रेवरोदसी

३ २    ३ २ ३    १ २    ३ १ २

धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम !" "पवमान" पूयमान ! त्वं "तविष्यमाणो" वर्द्धिष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्मिणा" प्रभूतया

---

* 'असि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति स्रुक्-स्रुव-ग्रह-चमसान्यायुधानि गमकत्वात्'—इति वि० ।

† 'अपस्युभिः—अपइच्छद्भिः ऋत्विग्भिः'—इति वि० ।

‡ 'अज्यते—अज क्षेपणे, क्षिप्यते'—इति वि० ।

¶ ऋ० वे० ७, २. १, ३ ।

§ 'तविष्यमाणः—स्तूयमानः'—इति वि० ।

२र र २ १
॥ आभीगवम् ॥ सोमा:पवन्तआ१यिन्दावाः। अ

र २ १ १ र २ १र १र
स्मभ्यम्। गातूर३वा। ऊम्मार२१ऽर। तमामित्रास्वा

१र १र१ ३ १ १ १ १ १ १ १ २ १ २
नाअरेपसा२३४५ः। सूवा३उवा। धी२याः। स्व२३वाः।

१ २ ४ ५ १र र र र २ १र
विदा। औ३ह्वोवा॥(१) तेपूतासोविपा१श्चायिताः। सो

र २ १ १ र र २र १
मासः। दधार३आ। ऊम्मा२१ऽर। श्रिरःमूरासोन

२ १र १ १ १ १ १ १ २ २ १
दर्शतासा२३४५ः। जायिगा३उवा। त्ना२वो। ध्रू२३

२ १ २ ४ ५ २ र र र
वाः। घृता। औ३ह्वोवा॥(२) मृषाणासोविया१द्रा

२ १ र र र २ १
यिभायिः। चितानाः। गोरार३धा। ऊम्मा२१ऽर।

१र २१ २ १ ३ १ १ १ १ १ १ २ १
त्वचोषमस्मभ्यमभिता२३४५ः। सामा३उवा। स्वा२रा

२ १ २ ४ ५
न्। वा २ ३ स्व। विदा। औ ३ ह्वोवा। ह्वो ५ ड्‌ई।

डा(३) ॥ १७ * ॥ [६]

२र र २ १ २
॥ निषेधम् ॥ सोमा:पवन्ता ३ इन्दवाः। अस्माभ्य

* ऊ० गा० १५प्र० १ख० १७सा०।

धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुक्ष "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [बहुनामैतत् (निघ० ३, १, ५)] बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च॥३।१२

२ र १ २ १
॥ उदङ्गार्गवम् ॥ धर्त्तादायिवा२३ः। पवतायिका

२र १र १ र १ २र १
२३। त्वीयोरसाः। दक्षोदायिवा२३। नामनूमा२३।

२र १र १ २ १ २र १
दीयोनूभायिः। हरिःसार्ज्जा२३। नोअतायियो२३।

२र १ २ र १ २ १ २र
नासत्वभायिः। वृथापाजा२३। सिक्रणूषा२३यि। ना

र २ २र र १ १ र १ २र
दीषुवा३१उ॥(१) शूरोनाधा२३। तंआयूधा२३। गा

१ २ १ २ १ २र १
भस्तियोः। सुवःसायिषा२३। सन्नथायिरा२३। गाविष्टि

---

* 'जठरेषु आविश'--सप्तम्या बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विद्युदभ्रे यथा अभ्राणीव रोदसी द्यावापृथिवी व्याप्य'—इति वि०।

‡ धिया—बुद्ध्या—इति वि०। "धीः"—इति निघण्टौ कर्मनामस्वेकविंशतितमम्पदम् (२, १)।

१ २ १ १ २ १ ४ ५ २
ज्ञा । तुविक्तमा२ः । इहा३ । मायिचा३सखानाः । हा
३ ३ १ र १ २ १ २ १ २ ४ ५
होर३४हा । अरेपार३साः । इहा३ । सूवा३धीयाः ।
२ २ ५ २ २ ४ १र र र र
हाहो२३४हा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो
२ र १ २र १ २ र १ १ २
वा३यिपश्चिताः । सोमासोदा । धियाशिरा२ः । इहा
१ २ ४ ५ २ ३ ५ २ १ २
३ । हरा३सोना । हाहोर३४हा । दर्शता २ ३ साः ।
१ २ १ २ ४ ५ २ ३ ५ ३ २
इहा३ । जायिगा३त्नावाः । हाहोर३४हा । भ्रुवा३
४ २ र र र २ १
या५त्ता६५६यि ॥(२) सुषाणासोवा३यद्रिभायिः । चिता
२र १ २ १ १ २ १ २ ४ ५
नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।
२ ३ ५ २ १ २ १ २ १ २ ४
हाहोर३४हा । भ्यमभार३यिताः । इहा३ । सामा३स्व
५ २ ३ ५ ३ २ ४ ३ १ १ १
रान् । हाहोर३४हा । वसू३वा५यिदा६४६ः । हे२३४
१
५(३) ॥ १८ * ॥ [७]

२र र १र २र १ १
॥ क्रौञ्चाद्यम् ॥ सोमा पवोहो । ताइन्दवाः । अस्म

* ऊ० श्रा० १५प्र० २श्र० १८सा० ।

२ १ २र १ २र १
षू। इन्द्रस्याशू२३। थमीरायार२३न्। आपस्युभायिः।
२ १ २र १ २र १र
इन्दुर्द्यायिन्वा२३। नोश्रज्याता२३यि। मानीषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रस्यासे२३। मपवामार२३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। णेजठारा२३यि। षूश्राविशा। प्रनः
१ २ १ २र १र २र १
पायिन्वा२३। विद्युदाभ्रे२३। वारोदसायि। धियानो
२र १ २र१ २ १ १ १ १
वा२३। जाऽउपामा२३। हौग्रस्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ कावम् ↑ ॥ धर्त्तावा। दिवःपवतेका। त्वियोरा
१र र र र २ र १ १
सा२ः। दत्तोदेवानामनुमा। दियोन्हभा२यिः। हरिः
र र २ १ १ २ ४ ५
स्रजानोश्रतियो। नसत्वाभा२३यिः। वार्था ३ पाजा।
२ १ १ २ ४ २र १
सिक्तणूषा२३यि। नादा३यिषूवा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तश्रायुधा। गभस्तायो२ः। स्वःसिषास्त्रथिरो।

* ऊ० गा० ४प्र० २ख० १४सा० । "स्वारकावम्"—इति ख० पु० पाठः ।

१ २ ४ २र १र र
भ्यङ्गा३। त्वुवा३यिता५मा६५६:। मित्रारखानौह्वो।
२र १र २र १ २ ४
आरेपसा:। सुवाधिया३:। सूवा३यिवा५यिदा६५६: ॥(१)
२र र १र र २र १ २र र र १ २
तेपूतासौह्वो। वीपश्चिता:। सोमासोदा३। धाआ३
४ २र र १र र २ १र २
ग्राप्यिरा६५६:। सूरासोनौह्वो। दर्शतासा:। जिग
१ २ ४ २ र १र र
त्नवो३। ध्रूवा३घा५र्त्तौ६५६यि ॥(२) सुष्वाणासौह्वो।
२र १ २ र र १ २ ४
वीयद्रिभायि:। चितानागो३:। आधा३यित्वा५चा६५
२ १ र २र १ २ १
यि। इषमसौह्वो। भ्यामभिता:। समस्वरा३न्। वा
२ ४
सू३वा५यिदा६५६:(३) ॥ १ * ॥ [८]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५:प। वा ३ न्ता ३ इन्दा
५ १ २१ २ २ १ १र
वाः। आसमभ्यङ्गा। तूवायित्ता३माः। मित्रा २खा।
र २ १ २ २ १र
नाआर२३रे। ऊम्मायि। पा३साः। सूवाधियःसुवा२
२ २ १ २ १र र र र र २
विदाउ ॥(१) दास्तायि। पूतासोविपश्चितःसोमासोदा।

* ऊ० गा० १६प्र० १अ० १खा०।

गविष्टायिषू२। इन्द्रस्यशुष्ममीरयान् । अपस्युभार३यिः ।
आयिन्द्र३र्हायिन्वा । नोअज्यातार३यि । माना३यिषा
पुयिभा६५६यिः ॥(२) इन्द्रोवा । स्यसोमपवमा । नऊ
म्मायिणा२। तविष्यमाणोजठरायि । ष्वाबायिशा२।
प्रनःपिन्वविद्युदभ्रे । वरोदासार३यि । धाया३नोवा ।
जा ऽउपामार२३। हीशा३स्वा५ताई५६ः(३) ॥ १६ * ॥ [२]

॥ यज्ञायज्ञीयम् ॥ धर्त्ताऽ५दि । वा३ःपा३वतेका ।
त्वोयेरसोदक्षोदेवानाममुमा । दी३योनृ३भायिः । हरा
२यिःसृजानोअत्योमत्व । भिर्वा२३र्था । ऊम्मायि । पा
३जा । सायिकृण्वेनदार२यिषबाउ ॥(१) आशू । रो
नधत्तआयुधागभस्त्योःस्वःसिषासन्नयिरो । गा३वायिष्टा
३यिषू । इन्द्रा२स्यशुष्ममीरयन्नपस्य । भिरार३यिन्दः ।

* ऋ० मा० ९म० १सू० १६मा० ।

२ १ २ २ १८ १ २ १
धा३आआ३यिराः। सूरा२सः। नदा२३र्भा। ऊम्भा
२ १ १ २ ३ १ १
यि। ता३साः। जायिगत्नवोधवा२घृना३ ॥(२) तायि
२ १२ २ २ २ २ २ १ २ २
सू। प्राणासोव्यद्रिभिश्चितानागोः। आ३धायित्वा३चा
१ १ २ १ २ १
यि। दूषा२म। सम्या२३मा। ऊम्भायि। भा३यिताः।
१ ३ १ १११
सामस्वरन्वमूर२विदा३। वा३४५(३) ॥ १४ * ॥ [९] २०

अथायापवेति-तृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा।

३ १ ३ १ २ १२ ३२
अयापवापवस्वैनावसूनि
३ १ २ ३ १ २ ३ १ २
मा९श्वत्वइन्दोसरसिप्रधन्व।
३२ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूतिं
२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात्॥ १ † ॥

हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—

* ऊ० गा० २१प्र० १अ० १४खं०।

† ऋ० आ० ६, १, ५, ९ (२भा० १४२ पृ०) = ऋ० वे० ७, ४, २१, १।

ऊम्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ॥(२)

भायिरायि। द्रस्यमोमपवमानऊर्म्मिणातविष्यमाणोजठरा

यि। षू३आवा३यिष्मा। प्रना२:पिन्वविद्युदभ्रेवरोद।

सोधार३या। ऊम्मायि। नो३वा। जा९उपमाहिश्रार

श्वताउ। वा३४५(३)॥ १५ * ॥ [३]

॥ शाकरम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते

कृत्वियोरसा। एहिया। एहिया३४। हाउदाक्षाः।

दा२३४यि। वानामनुमाद्रियोनृभिः। एहिया। एहि

या३४। हाउहारीः। सा२३४। जानोअत्योनसत्व

भिः। एहिया। एहिया३४। हाउवार्था। पा२३४।

जा९सिक्तणुषेनदीषुवा। एहिया। एहिया३४। हाउ॥(१)

हाउशूराः। ना२३४। धत्तआयुधागभस्त्योः। एहि

* ऊ० गा० १५प्र० १ख० १५सा०। † "शार्गम्"—इति ख० पु० पाठः।

पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति क्विप् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाचः ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम् ]। तथा हे "इन्दो !" त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "अश्वश्चित्" सर्व्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेधश्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्म्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत; मह्यं "नरं" कर्म्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्व्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३
उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ ३ १र २र
षष्टिंसहस्रानैगुतोवसूनि

३ २ ३ उ ३ १ २ ३ १ २
वृत्तन्नपक्वन्धूनवद्रणाय॥ २ *॥

* ऋ० वे० ७, ४, २१, ३।

या । एहिया३४ । हाउस्त्वा: । सा२३४यि । षास
न्नृथिरोगविष्टिषु । एहिया । एहिया३४ । हावायिन्द्रा ।
स्या२३४ । प्रतुञ्चमीरयन्नपस्युभिः । एहिया । एहिया
३४ । हावायिन्दूः । हा२३४यि । न्वानोअज्यतेमनो
षिभिः । एहिया । एहिया३४ । हाउ ॥(२) हावायि
न्द्रा । स्या२३४ । सोमपवमानऊर्म्मिणा । एहिया ।
एहिया३४ । हाउतावायि । ष्या२३४ । माणोजठरेष्वा
विश । एहिया । एहिया३४ । हाउप्रानाः । पा२३४
यि । न्वविद्युदभ्रेमवरोदसी । एहिया । एहिया३४ ।
हाउधाया । नो२३४ । वाजाँ३उपमाहिशश्वतः । एहि
या । एहिया३४ । हाउ । हो५ई । डा(३) ॥ २० * ॥ [४]

॥ वासिष्ठम्† ॥ उऊवायि । धर्त्ता३४औहोवा । दि

---

* ऊ० गा० १७प्र० १ख० २०सा० ।

† "उऊवायि वासिष्ठम्"—इति ख० पु० पाठः ।

हे सोम ! "उत" अपिच "अवाय्यस्य" सर्वैः अवणीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठार्थे चतुर्थी श्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं स्वभूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" चर । "नैगुतः" नीचीनं गन्तवे* [ न अन्नायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सामः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत् । कथमिव ? "वृत्तं न पक्वं" पक्व-फलं वृत्तं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया ।

२ ३ १ २ ३ २ ३ १ २ ३ १ र
महीमे अस्यवृषनामशूषे

२र ३ १ २ ३ १ २
माᳬश्चत्वेवापृशनेवावधत्रे ।

१ २ ३ १ २ ३ २ ३ १ २ ३
अस्वापयन्निगुतःस्नेहयच्चापा

२ ३ २३ १ २ ३ २
मित्राᳬअपाचितोअचेतः ॥ ३ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि० ।
† ऋ० वे० ७, ४, २१, ४ ।

२ १ ९ २ २ ४र ५ ३ २ ३र ४र ५ १र
वाः। पवते। क्रत्वियोरसाः। दचा३४औहोवा। दे

२ १ २र ३ ४र ५ ३ २ ३र ४र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

१ २ १ १र ३ ४ ५ ३ २ ३र ४र ५
वृजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

१र २ १ २र ३ २ ४ २र
पाजा। सिक्रणु। षे। नदा३यिषू५वा६५६॥(१) सूठ

२ ३र ४र ५ १ २ १र १र २ ४ ५
रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

३ २ ३र ४र ५ १ २ १ १र ३ ४ ५
सुवा३४औहोवा। सिषा। सा३नृथि। रोगविष्टिषू।

३ २ ३र ४र ५ १ २ १ २ ३ ४ ५
इन्द्रा३४औहोवा। स्यष्ठू। क्ष्मा३मीर। यन्नपस्युभा

३ २ ३र ४र ५ १ २र १ २र ३
यिः। इन्दू३४औहोवा। हिन्वा। नोअज्य। ते। म

२ ४ ३ २ ३र ४र ५ १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

२ १ २र ३ ४र ५ ३ २ ३र ४र ५
सो। मा३पव। मानऊर्म्मिणा। तवा ३ ४ औहोवा।

१ २ १ २र ३ ४र ५ ३ २ ३र ४र ५
ष्यमा। णो३जठ। रेषुआविशा। प्रना३४औहोवा।

१ २ १ २र ३ ४र ५ ३ २ ३ २
पिन्वा। विद्युद। भ्रेवरोदसायि। उऊवायि। धिया

नम्, "इमे" एते द्वे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे* भवतः; ये च कर्मणी "मांश्चत्वे" [अश्वनामैतत् (निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वात् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-शीले भवतः। सऽयं "निगुतः" नीचैः शब्दायमानान् शत्रून् "अस्नापयत्" असूयपत् अवधीदित्यर्थः। किञ्च "स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून्। अथ प्रत्यक्षः। हे सोम! स त्वम् "अमित्रान्" शत्रून् "अपाचेत" अपगमय। तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः" अस्मच्छकाशात् अपाचेत अपगमय [अञ्चतिर्गतिकर्मा(भ्वा० प०)] ॥ ३ ॥ २१

२र १ २     १ २     १ र
॥ औष्टाद्यम् ॥ औहोवायि। अयोवायि। पवा

र र २१ २    ऽ २    १ २    ऽ १    र
स्वैनावस्त्व२३नी। औ३होऽयि। इहा। ई३या। मा५

१ र    २१    २    ऽ २    ३ २    ऽ
स्वल्कइन्द्रोसरसिप्रधा२३न्वा। औ३होवायि। इहा। ई३

२    र    १ र    २१    २    ऽ    २
या। मा५स्वल्वइन्द्रोसरसिप्रधा२३न्वा। औ३होवायि।

---

* 'शूषे—स्नापयामः अथवा शूषे शोषणाय'—इति वि०।

† 'मांश्चत्वे—मंहनीयत्वाय'—इति वि०।

‡ 'अपाचितः—पतिता चेतसा भवन्ति'—इति वि०।

३४औहोवा। नोवा। जा१उप। मा। हिंसा३स्वा

५ता६५६:(३) ॥ १६ * ॥ [५]

॥ वायोरभिक्रन्दन् † ॥ धर्त्तादिवःपवतेकृत्वियो। हो

यिरासाः। दक्षोदेवानामनुमादियो१नृ३भायिः। हरिः

सृजानोअतियोनसा१त्वा३भायिः। वार३४र्था। पार३४

जा। सायिक्षणुषा३यि। हार३यि। नदा३यिषू५वा६

५६ ॥(१) सूरोनधत्तआयुधागभो। होस्तायोः। स्वःसि

षासन्नथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१

स्यू३भायिः। आर३४यिन्दूः। हार३४यिन्वा। नोअ

ज्यता३यि। हार३यि। मना३यिषा५यिभा६५६यिः ॥(२)

इन्द्रस्यसोमपवमानओ। होर्म्मायिणा। तविष्यमाणो

जठरेष्वा१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० २३प्र० २ख० १६सा०।

† "वायोरभिक्रन्दः"---इति ख० पु० पाठः।

इहा। ई३या। अभ्रश्चिद्यस्यवातोनजू२३तीम्। औ३
होयि। इहा। ई३या। पुरुमेधाश्चित्तकवेनरा२३धा
त्। औ३होयि। इहा। ई२। या२३४। औहोवा॥(१)
औहोहायि। उतोहायि। नएनापवयापवा२३स्वा। औ
३होयि। इहा। ई३या। अधिश्रुतेअवायियस्यतार२प
यिर्थायि। औ३होयि। इहा। ई३या। षष्ठि(ँ)सह
स्रानैगुतोवस्व२३नी। औ३होयि। इहा। ई३या। वृ
त्रन्नपक्कन्धूनवद्रुणा२३या। औ३होयि। इहा। ई२।
या२३४औहोवा॥(२) औहोहायि। महोहायि। मे
अस्यवृषनामपू२३षायि। औ३हायि। इहा। ई३या३
मा(ँ)स्त्वेवापूश्नेवावधार२३नायि। औ३हायि। इहा।
ई३या। अस्वापयन्निगुतस्वेहया२३चा। औ३होयि।

२ ५ ३ ५ १ २ ३ २ १
यिं। धा२३४या। नो२३४वा। जा८उपमा३। हा२

२ ४
३। चिशा३श्वा५ता६५६ः(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा।

१ २ ३ २उ ३ १ ३क २र २ १ ३ १ २
यदिन्द्र प्रागपागुदङ्न्यग्वाहूयसेनृभिः।

१ २ १ १र २र २ २ ३ १ ३ १ २
सिमापुरूनृषूतोअस्यानवेसिप्रशर्द्धतुर्वशे ॥ १ ‡ ॥

हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶ "अञ्चेर्लुगिति (५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः ["न्यधीच (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्य्याय आहूयसे ["हिंसिमश्रेष्ठेन्द्रसिमइतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

---

* ऊ० गा० १३प्र० २ख० १९सा०।

† ऋषी माध्यन्दिनः पवमानः, इदानीं पृष्ठानुप्रपद्यन्ते—इति वि०।

‡ छ० आ० ३, २, ४, ७ (१भा० ५७१पृ०)=ऋ० वे० ५, ७, ३०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।

२ १ ऽ २ १ र र र र १ १ २
इहा। इ३या। अपामिवाऽ९अपाचितोअचा२३यिताः।
ऽ २ २ १ १ २ ५र र
औ३होयि। इहा। इ२। या २३४। औहोवा।
२ १र ३ २
ए३। दौदिवो१(३) ॥ १७* ॥ [१]

१र २र ३र २ १ २ १
॥ इहवद्वासिष्ठम् ॥ औहोवाहा३ होयि। इहा।
१र २ १ र २ ३ ४ ५ २र १ २
अयापवा। पवस्वै। नावसूना। माऽ९श्चत्वआयि। दो
१ २ ३ ४ ५ २ १ २ १ र २ ३ ४
३सर। सिप्रधन्वा। ब्रध्नश्चिद्या। स्या३वा। तोनजू
५ २ १र २ १ २ २ · ४
तोम्। पुरुमेधाः। चित्तक। वा३४३यि। ना३रा५
२ १ २ १ २ ३ ४ ५ २
न्वा६५६त् ॥(१) उतनए। ना३पव। यापवस्वा। अ
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि। श्रवायि। यस्यतायिर्थायि। षष्ठिऽ९सहा।
२ १र २ ३ ४ ५ २ २ १र २
स्रा३नैगु। तोवेसूनी। बृहन्नपा। कधून। वा३४३त्।
२ ४ २ १र र २ १ २ ३
रा३णा५या६५६ ॥(२) महीमेश्रा। स्या३वृष। नाम
४ ५ २र १ र २ १ र २ ३ ४ ५ २
अूषायि। माऽ९श्चत्वेवा। पृश्ने। वावधवायि। अ

* ऊ० गा० ३प्र० १ख० १७सा०।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभि-स्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! "तुर्वशे" —एतत्संज्ञके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया।

२ ३ २३ १ २ ३ १ २ ३ २ ३१ २ ३ १ २ ३१ २

यद्वारुमेरुशमे श्यावके कृप इन्द्र मादयसे सचा।

१ २ ३ १ २ ३ १ २ ३ १र २र३ १ २

कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रायच्छन्त्यागहि ॥२*॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्र"! त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढ़ारः अथवा अन्नानां वोढ़ारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र!" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्र-मागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्]॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिः स्तोमवाहसः"——इति पाठो ॥ २ ॥ १३

२ ३ २ ३ २ १ २र

॥ नैपातिथम् ॥ यदिन्द्र प्रागपागुदग् । नायम्वा

* ऋ० वे० ५, ७, २०, २।

१र २१ २३४५ १र२र३र २ १
खापयात्। निगुतः। सेद्वयच्चा। औहोवाद्वा३द्वोयि।
१२ १र २१र २ २४
द्वा। अपामिचा॰। अपाचि। तो३४३। आ२चा
५यिता६५६:(३)॥१०*॥[२]

१ र १ १ २र र १
॥वाच्चतुरम्॥ अयापवोवा पावस्वैना। वमूर३
२ १र र २१ २ १२१
नी। मा॰स्वत्वइन्दोमरसि। प्रधा२३न्वा। ब्रधश्चिद्य
२ १ २ ३ ५ १ २ १
स्य। वा। तोनाजू२३४तोम्। पुरु। मायि। धास्वि
१ ४ २ ५ २
त्ताका२३। वा२३यिना३। रा३४५धोई्वायि॥(१) उत
१२ १ २र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
२१ २ १ २१२र१र २
य। स्यना२३यिर्थायि। पष्टि॰मद्वस्नानै। गू। तोवा
३ ५ १ २१ १ ४
सू२३४नी। वृत्ताम्। ना। पाक्रन्धूना२३। वा२३द्रा
२ ५ २र १ २ १ २र
३। णा३४५योई्वायि॥(२) मद्योमओवा। स्यात्रुषना।
१ २ १र रर र र १ २
मघ्रु२३षायि। सा॰स्वत्वेवापृ॰नेवा। वधा२३वायि।

* ऋ० गा० ८प्र० २अ० १०गा०।

र १ २ २ ३र ५ १
डू । यसायिनृभीऽ३ः । हा । औहो२३४वा । सिमा२

१र १रर १ २ १ ७ २ ३र ५
पुरुनृषूतोअ । सियानवे२३ । हा । औहो२३४वा ।

२ २ ३र ५ १ ३ ५र
असाभ्यिप्रागा३ । हा । औहो२३४वा । धा२त२३४औ

र ५ २ २ १
हावा । बो२३४णे ॥(१) अभिप्रशर्द्धतुर्वशा३ए । आसि

२ १ २ २ ३र ५ १ १२र
प्रश । धतूर्वशे३ । हा । औहो२३४वा । यदा२रुमे

१२र १र २ १ ७ २ ३र ५ १
रुशमेध्या । वकायिकृपा२३ । हा । औहो२३४वा । इ

२ २ ३र ५ १ ३ ५र
न्द्रामादा३ । हा । औहो२३४वा । या२सा२३४औ

३ ५ १ र र २ १
होवा । सा२३४चा ॥(२) इन्द्रमादयसेसचा३ए । आ

२र १ २ २ ३र ५
यिन्द्रमाद । यसायिसचा३ । हा । औहो२३४वा ।

१ र १र र २ २ १ ७ २ ३र
कण्वा२सस्त्वास्तोमेभिर्न । ह्मवाहमा२३ः । हा । औ

१ १ २ ३र ५
हो२३४वा । इन्द्रायाच्छा३ । हा । औहो२३४वा ।

१ २ ५र र २ ५
ता२आ२३४औहोवा । गा२३४ही(३) ॥ १५ * ॥ [१] १३

* ऊ० गा० ४प्र० १ख० १५गा० ।

१ र २ १ २ १ २ ३ ५ १
अस्वापयन्निगुतः । स्ने । हायार२३४चा । अपा । मा

२ १ १ ४ २
यि । चा०५अपाचार३यि । तो२३आ३ । चा३४५यितो

५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमतृचे†, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र
अग्ने त्वन्नो अन्तम उत त्राता शिवो भुवो वरूथ्यः॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १३प्र० २ख० १गा० ।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ छ० आ० ५, २, २, २ (२भा० ८९८ पृ०)=ऋ० वे० ४, १, १६, १ ।

अथ प्रगाथे चतुर्थसूक्तं*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ १ २र
उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः ।

३ १ २ ३ २ ३ १ २ ३ १र २र३ १ २
सत्राच्यामघवांत्सोमपीतयेधियाशविष्ठआगमत् ॥१†॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चत्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" अगच्छतु ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
तꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।

३ २ ३ १ २ ३ १र ३र ३ १ २ ३ २ ३ १ २
उतोपमानाम्प्रथमोनिषीदसिसोमकामꣳहितेमनः ॥२‡॥१६

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

---

* 'अच्छावाक साम'—इति वि० ।

† ऋ० आ० ३, १, ५, ८ (१भा० ५९१४०)=ऋ० वे० ६, ४, ३५, १ ।

‡ ऋ० वे० ६, ४, ३५, २ ।

अथ द्वितीया।

१ १ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादिलक्षणं धनं "दाः" अस्मभ्यं देहि ‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभिर्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समानख्यातिभ्यः पुत्रेभ्य § सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३॥ २२

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

इन्द्र! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः॥

"ओजसा"-"ओजसः"—इति पाठौ॥ २॥ १४

॥ वैयश्वम्॥ उभयꣳशृणवच्चनाइए। आयिन्द्रो२ अर्वागिदंवचा२३ः। ह्रोवा३हायि। सत्राचियामघवा २न्। सो। मापा३हायि। ता२३४यायि। धियाश विष्ठआ२३होयि। गमात्। औ२३होवा॥(१) धिया शविष्ठआगमा३दे। धाया २शविष्ठआगमा२३त्। ह्रो वा३हायि। तꣳहिस्वराजा २वृषभाम्। तामो३हायि। जा२३४सा। धिषणेनिष्टता२३होयि। त्वष्टः। औ२३ होवा॥(२) धिषणेनिष्टतक्षतू३रे। धायिषा २णेनिष्टत क्षतू२३ः। ह्रोवा३हायि। उतोपामा२प्रथमो। नायि

१ २ १ २ १
॥ गूह्म्॥ ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३।
५ ११२२१२ ११२२३११११ २१२
ता२३४मा:। उतत्राताग्निवोभुवा२३४५ः। ग्निवोभुवा२
४ ५ ४ ५ १ २ १
३:। वरोवा। था५योद्दाथि॥(१) वाह्वः। अ। ग्ना
२ १ ५ १२२ १
यिर्वा२३सू। ऊम्मा२३। आ२३४वा:। अच्छानक्षिद्युम
२३ ११११ २१ ४ ५ ४
त्तमा२३४५ः। द्युमत्तमा२३ः। रयोवा। आ५यिन्दो
५ १ २ १२ २ १
द्दाथि॥(२) तान्वा। ग्नो। चायिष्ठा२३ई। ऊम्मा
५ २१२ १२१२२२ ११११ २
२३यि। दी२३४वा:। सुम्नायनूनमीमहा२३४५यि। न
१२ ४ ५ ४ ५
मीमहा२३यि। सखोवा। भा५योद्दाथि(३)॥१८*॥[१]

३ २ २ ५
सत्रासाचीयम्॥ अग्ना३४यि। त्वन्नोअन्तमः। ओ
५ २ १ १ १ २ १ ऽ
ईवा। उतत्रा२ता। ग्ना२यिवो। भुर२३वा:। वरौ
१२ १२ १ १ ५ ५ २ २
३हो। वाचा३४३यि। था२३४योद्दाथि॥(१) वह्व३४ः।
२ ५ ५ २ १२ १ १
अग्निर्वसुश्रवा:। ओईवा। अच्छाना२च्चायि। द्यू२मा।

---

* ऊ० गा० ६प्र० २ख० १८गा०।

२ २ ३ ५ १र र १
पा३र्वायि। दा२३४सायि। सोमकामꣳहिता२३यिद्वो

२ १ ४ ५ ४
यि। मना। औ३होवा। चो५ई। डा(३) ॥ १६* ॥[१]

२ १ २ १ र
॥ वाग्रम् ॥ उभयꣳश्रा। णवाच्चा१ना २:। इन्द्रो

र २ १र र र र १
अर्वागिदंवा१चा २:। सत्राच्यामघवांत्सोमपायिता१या

१र १ १ २ ५र र
२यि। धियाग्रा २ ३ वा ३यि। छा२आ२३४औहोवा।

३ ५ १र १ २
गा २ ३ ४मात् ॥(१) धियाग्रवायि। छआगा१मा २त्।

१र र २ १ र २
धियाग्रविष्ठआगा१मा २त्। तꣳहिस्वराजंवृषभन्तामो१

१ १ १ ३ ५र र
जासा २। धिषणे२३ना३यिः। ता२सा २ ३ ४औहोवा।

२ ५ २ र १ २ १
सा२३४तूः ॥(२) धिषणेनायिः। तता१तू २:। धि

र २ १र र र र २
षणेनिष्टताक्षा१तू २:। उतोपमानाम्प्रथमोनिषायिदा१

---

* ऊ० गा० ४प्र० २अ० १६सा०।

२ १ ऽ २र १र २ १ ५
तार३माः । रयौ३हो । वाहा३४३यि । आ२३४यिन्दो

५ ३ २ र र ५ र
ई३हायि ॥(२) तन्वा३४ । शोचिष्टदीदिवः । ओ६वा ।

२ १र १ १ २ १ ऽ १र
सुम्नाया२नू । ना२माथि । मा२३हायि । सखौ३हो ।

१र २
वाहा३४३यि६हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे†—

प्रथमा ।

३ १उ २ १ २ ३१ २ ३ १२ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुता प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सीषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० २ख० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० । सामैतदूह्यगानस्य ।

‡ ऋ० आ० ५, २, २, ६ (१भा० ८०३पृ०)=ऋ० वे० ८, ८, १५, १ ।

२ १   २   १   २   ५ २ २
सा२यि । सोमका२३मा३म् । हा२यिता२३४औहोवा ।

२   ५
मा२३४ना:(३) ॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम-खण्डे —

तृचात्मके प्रथमसूक्ते —

प्रथमा ।

१ २   ३ १ २   ३ १ २   ३ २   ३ १ २
पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः ।

३ १ २   ३ २ ३ १   २
वायुमारोहधर्म्मणा ॥ ‡ १ ॥

हे सोम ! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर । अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि ॥

"देवः"-"देव"—इति पाठो ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० ७गा० ।

† 'उक्तानि ष्ठ्वानि'—इति वि० ।

‡ ऋ० चा० ९, २, १, ५ ( १भा० ३७पृ० )=ऋ० वे० ७, ४, २३, १ ।

अथ द्वितीया।

३ १ २ ३क २र ३ १ २ ३ १र २र ३ १ २

यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु ॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु॥

"सहसीषधातु"-"सहचीक्षपानि"—इति पाठौ॥ २॥

अथ तृतीया।

२ १उ ३ १ २ ३ १ २ ३ १ २ ३ १ २

आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत् ॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु॥

"भेषजाकरत्"-"भूत्वविताततनूनाम्"—इति पाठौ॥३॥२३

---

* ऋ० वे० ८, ८, १४, २।

† ऋ० वे० ८, ८, १५, ३।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमाननितोशसेरयिꣳसोमश्रवाय्यम् ।
१ २ ३ १र २र
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान !" "इन्दो !" "सोम !" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृधइति तृतीया‡ ।

३ १ २ ३ १ २
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता ( ६, १, १, ६ = २भा० ४८ पृ० ) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ सुरूपाद्यम् ॥ पवस्वदा२यि । इया२इया । व
र १ १ १ १ २र १
आयूषा२क् । इन्द्रङ्गच्छा२ । इया२इया । तुतेमा

---

* ऋ० वे० ७, ४, २३, ५ ।

† 'तोशसे—तंश दाने ददासि'—इति वि० ।

‡ छ० आ० ६, १, १, ६ ( २भा० ४८४० )=ऋ० वे० ७, १, २४, ४ ।

अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः ! "वः" यूयम् "उप" समीपे "प्रार्च"
प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२ १ र ७
॥ उद्वंशपुत्रम् ॥ प्रवाः । आयिन्द्रायवृत्रहान्तमा

२ १ र र १ २ १ १ २
२३या । वायिप्रायगाथङ्गा२या३ता । याञ्जुजौवा३ ।

२ १ १ १
उप् । षाऽरतोऽ३ऽपुहायि ॥(१) अर्चा । ताभ्यर्क्मर्‍

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-
गतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, २, १० । १भा० ८९५पृ०)"—इत्यस्याः प्रतीकं
"प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,१,१,९ ।१भा० ८९४पृ०)"—इत्यस्याः
प्रतीकम् "अर्च"—इति, तथैव "उपप्रक्षेमधुमतिक्षियन्तः (५, १, १, ८ । १भा०
८९३पृ०)"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप"
—इति, ऊहगान-तृतीयप्रपाठकान्तिममुद्वंश पुत्रसाम (१००पृ०) सामैवात्र वक्तुमान
मन्यथा तस्य मूलीभूत-ऋचस्त्वालाभ एव सर्वथा स्यात् । अन्यत्राप्यदर्शनात् ।

† 'उद्वंशपुत्रोऽच्छावाकसाम । "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—
एवमृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि० ।

दा२ः। वायुमारो२। इया२इया। ह्वधर्मा२३णा३
४३ ॥(१) पवमाना२। इया२इया। नितोशासा२यि।
रयिᳪ सोमा२इया। अवाआया२। इन्दोसमू२। इया
२इया। द्रमावा२३यिआ३४३ ॥(२) अपघ्नन्पा२। इया
२इया। वसेमार्द्धा२ः। क्रतुवित्सो२। इया२इया।
ममत्सारा२ः। नुदस्वादा२यि। इया२इया। वयु
ञ्जा२३ना३४३म्। ओ२३४५ई। डा(३) ॥ १७* ॥ [१]

॥ भासम्† ॥ पव। स्वा३दायि। वाः। ईया। आ
यू१षा२क्। आयिन्द्रङ्गच्छ। तु। तौ३द्दो। वाहा
यि। मदा२ः। वायू२३म्। आ२रो२३४औहोवा।
ह्वधर्म्मणा१ ॥(१) पव। मा३ना। नायि। ईया। तो
शा१सा२यि। रायिᳪ सोम। आवौ३र्द्दो। वाहायि।

* ऊ० गा० ४प्र० २ख० १७सा०।
† "गायत्रीभासम्"—इति ख० पु०।

७ १ १ र २ १ १ १ ऽ
ताःसुवार२३र्क्काः । आस्तोभतिश्रुतो१यूइवा । सआ३उ

२ २ १ २ १
वा३ । उप् । आ॒ऽ२यिन्द्रो३५प्चायि ॥(२) उपा । प्रा

र ७ २ १ र १ २ २
चेमधुमतायिक्षिया २ ३ न्ताः । पूर्व्यमरयिन्धा१इम्ना३चा

१ ऽ २ २ १
यि । तआ ३ उवा ३ । उप् । आ॒ऽ २ यिन्द्रो ३ ५

२
चायि(३) ॥ १८ * ॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः ‡ ॥ ७ ॥

---

* ज० गा० ३प्र० २ख० १८सा० ।

† 'षष्ठमखः समाप्तः । इष्टव्रवरूचः समाप्तः'—इति वि० ।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिमलग्रन्थसम्मतश्च ।

१ १ १ ^ १ ५र र २ र ^
ई या २म् । इन्दो२३ । सा२मू२३४औहोवा । द्रमा

३ २ ५ २ ४ ५ ४ ५ १
विश्वा१ ॥(२) अप । घ्ना३न्पा । वा । ई या । सायि

२ १ २ र ऽ २र ^ ३र २ १
मार्द्धा २ः । क्रातुवित्सो । म । मौ३हो । वाहा । त्सरा २ः ।

१ १ ^ २ र ५र २ ^ २ १
नुदा२३ । स्वा२दा२३४औहोवा । वयुञ्जमा१म्(३)

॥ १८ * ॥ [२]

५ २ ४र ५र २ १
॥ काक्षीवन्तम् † ॥ पवस्वा२देवआयुषाक् । इन्द्रा

२ २र १ ऽ २ ३र २ १र
ङ्गच्छ । तुतेमदा३ः । ओ३४ । हाहोयि । वायूमा२

२ ३र २ ३र ५ ४ ५
३रो । हधौहोयि । औहो२३४वा । मा५णो६हायि ॥(१)

५ २ ४ ५र २ १ २र १ २र १ ऽ
पवमाननितोश्रसायि । रयायि१सोम । श्रवायिया३म् ।

२ ३र २ १ ३र २ ३र
औ३४ । हाहोयि । इन्दोसा२३म् । द्रमौहोयि । औ

१ ५ ४ ५ ५ २ ४ ५र
हो२३४वा । वा५यिश्रो६हायि ॥(२) अपघ्ना३न्पवसेमृ

२ १ २ १र २ १ ऽ २ ३र २
धाः । क्रतूवित्सो । ममत्सरा३ः । ओ३४ । हाहोयि ।

* ऊ० गा० ४प्र० २ख० १८सा० ।

† "काक्षीवतम्"—इति ख० पु० पाठः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## ॥ अथाष्टमाध्याय आरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चें† प्रथमे सूक्ते—

प्रथमा ।

१ १र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवाणो

३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्याः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोकजगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चं भवति । चतुर्विंशस्तौमिकश्छन्दसः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ ऋ० आ० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, ११, २ ।

१ २ ३ र २ ३ र १ ५ ४
नुदास्वा२३दायि। वायौहोयि। औहो२३४वा। जा

५
पूनोई२दायि(३) ॥ १९ * ॥ [३]

३ ४ ५ र ४ ५ र १ १
॥ गायत्रासितम् † ॥ पवस्वदेवआ। इया३४३ई३४

१ २ २ १ १
या। युषागिन्द्रङ्गच्छतौ२। द्दौ२। ऊवा२यि। मा

१ र २ १ र २ १ २ १ २
दा२ः। वायू३९द्दौयि। आरो३हो। द्दधर्म्मा२३णा

१ ४ ५ र ४ ५ र २ २ ५ १
३४३ ॥(१) पवमाननितौ। इया३४३ई३४या। प्रसायि

र २ १ १ १
रयि९सोमश्रवौ२। द्दौ२। ऊवा२यि। आया२म्।

२ १ २ १ २ १ र २
इन्दो३द्दोयि। समू३हो। द्रमावा२३यिशा ३ ४ ३ ॥(२)

४ २ ४ ५ र २ २ ५ १ र
अपघ्नन्पवसे। इया ३ ४ ३ई३४या। मृधाःक्रतुवित्सोम

१ १ १ २ १
मौ२। द्दौ२। ऊवा२यि। त्सारा२ः। नुदा३हो

र २ १ २ १ २ १
यि। स्वादा३द्दो। वयुञ्जा२३ना३४३म्। ओ२३४५ई।

डा(३) ॥ २० ‡ ॥ [४]

---

* ऊ० गा० ४प्र० १ख० १९सा०।

† "वासिष्ठमासितम्"—इति ख० पु०।

‡ ऊ० गा० ४प्र० १ख० २०सा०।

भावणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३८ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महि-व्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः [ "राजाहः सखिभ्यष्टच् ( ५, ४, ८१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूय-माणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

२ ३     २ ३ १ २ ३ २उ ३
प्रहꣳसासस्तृपला*वग्नुमच्छा†
२उ ३ १ २
मादस्तंवृषगणाअयासुः।
३   २ ३   १ २   ३ १ २
अङ्गोषिणः‡म्पवमानꣳसखायो
३ १ २ ३ १र २र    ३ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम् ¶ ॥ २ § ॥

---

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष्य"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वआयर२३षाक्। इन्द्रञ्च्क्रतुना१यिमा३दाः। वायुमारोर३४हायि। हाधा३हा। मणा। औ३होवा ॥(१) पवमानो। हायि। नितोश्रा२३सायि। रयिंसोमश्रवा१आ३याम्। इन्दोसमोर३४हायि। द्रामा३हायि। विशा। औ३होवा ॥(२) अपघन्यो। हायि। वसेमा२३र्द्धाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादोर३४हायि। वायू३हायि। जनाम्। औ२३होवा। होऽ५ई। डा(३) ॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता ( ६, २, १, ५=२भा० १६१पृ० ) व्याख्याता च ॥ १ ॥

---

* ऊ० गा० १७प्र० १ख० १सा० ।

† छ० आ० ६, ०, १, ५ (२भा० १६१पृ० )=ऋ० वे० ७, ४, २३, १ ।

अथ द्वितीया।

३ १ २ ३ १र २र ३ १ २ ३ १ २
वयन्ते अस्य राधसो वसोर्वसो पुरुस्पृहः।
१ २र ३ १र २र ३ १ २
निनेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो ॥ २ * ॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्तमन्तिकतमाः "स्याम" भवेम ॥ २ ॥

अथ तृतीया।

२ ३ २ ३ १ २ ३ २ ३ ३ १ २
परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः।
२ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
धारा य ऊर्द्ध्वो अध्वरे भ्राजा नयाति गव्ययुः ॥३†॥ १६

"गव्ययुः" गोकामः यद्वा क्षीरादि कामयमानः "ऊर्द्ध्वः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्त्या अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, ३।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यचरत्" परितः चरति ।

"अक्षरत्"-"अक्षाः"—इति पाठौ ॥ ३ ॥ १६

॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् । रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । स्वभा पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । सा५हो६ हायि ॥(१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो पुरुस्पृहा२३ः । नायिनेदिष्ठा३१२३ । तमा५इषाः । स्वार्म सुम्ना३१२३यि । तओवा । धा५यिगो६हायि ॥(२) परि । स्यस्वा३ । नोअक्षरात् । इन्दुरव्येमदच्युता२३ः । धा रायऊ३१२३ । र्वोआ५र्वरायि । भ्राजानया३१२३ । ति गोवा । व्या५यो६हायि(३) ॥ ३ † ॥ [१]

॥ ऐड्कौत्सम् ॥ अभोहोने२३ । वाजसातममीया ।

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १ख० १खा० ।

२ ११ १२ १ २ १ १ १
रयिमर्षशतस्पृहम्। आयिन्दोसच्च। सभर्णा२३साम्।

१ २ २ १ २ २ १२ २
तूवा३हायि। द्यूम्ना३ऽहायि। विभासा२३हा३४३म्॥(१)

२ १२ १ ४ ५ १२२ २ २ १ २
वयऽ३ऽहीते२३। अस्यराधसईया। वसोर्वसोपुरुस्पृच्चः।

१ २ २ १२ २ १ २ २ १ २
नायिनेदिष्ठ। तमाआ२३यिषाः। स्यामा३हायि। मूम्ना

२ २ १ २ ३२ २ १
३यिहायि। तेअधा२३यिगा३४३उ॥(२) परोहिस्था२३ः।

४२ २ ५ १ २ १ २२ १ २ १ २ २ २
स्वानोअत्तरदीया। इन्दुरव्येमदच्युतः। धारायजू।

२ १ २ १ २ २ १ २ २ १
ध्वोअध्वा२३रायि। भ्राजा३हा। नाया३हा। तिगव्या

२ १
२३यू३४३ः। ओ२३४५ई। डा॥(३)॥ ४ *॥ [२]

२ १२ २ १२ १२ १ १
॥ शुद्धाशुद्धीयाद्यम्†॥ अभीनोवाजसातमाम्। रयि

२ १ २ १ २ २ १ १ १
मर्षशतस्पृ२३हाम्। इन्दोसहस्रभर्णा२३साम्। तुवा

२ ३२ १ ५२ २ ३ १
यिद्यू२३म्ना३म्। वा२यि। भामा३४औहोवा। हा२

१ १ १ २ १ २ २ १२ २ १ २ २ २ १ २
३४५म्॥(१) वयन्तेअस्यराधसाः। वसोर्वसोपुरुस्पृ२३हाः।

* ऊ० गा० ५प्र० १ख० ४सा०।

† "पदाभ्यस्तशुद्धाशुद्धीयाद्यम्"—इति ख० पु०।

निनेदिष्ठतमाश्रा२३यिषाः । स्यामसू२३म्नाश्यि । तेर । श्रध्रा३४श्रौहोवा । गा२३४५उ ॥(२) परिस्यस्वानोश्रच्च रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्ध्वोश्रध्वा२३ रायि । भ्राजाना२३या३ । ता२यि । गव्या३४श्रौहो वा । यू२३४५ः (३) ॥ ५ * ॥ [३]

॥ क्रौञ्चाद्यम् ॥ अमीनोवौहो । जासातमाम् । र यिमर्षा३ । श्राता ३ स्पृ५हा६ ५ ६म् । इन्दोसहौहो । स्राभर्णसाम् । तुयिद्युम्ना३म् । वायिभा३सा५हा६५६भ्॥(१) वयन्तश्रौहो । स्याराधसाः । वसोर्वसा३उ । पूरू३स्पृ ५हा६५६ः । निनेदिष्ठौहो । तामाइषाः । स्यामसु म्ना३यि । तेश्रा३ध्रा५यिगा६५६उ ॥(२) परिस्यसौहो । नोश्रच्चरात् । इन्दुरव्या३यि । मादा३च्यू५ता ६ ५ ६ः ।

* ऊ० गा० ५प्र० १ख० ५सा० ।

१र र १ र २र १ २र र १
धारायऔहो। ध्वोअध्वरायि। भ्राजानया३। तायि
२ ४
गा३व्याप्रयू६५६:(३) ॥ ६ * ॥ [४]

२ र र १ २ २ ५
॥ रयिष्ठम् ॥ अभीनोवा। जमाता३माम्। औ३
२ २ १ २ १ ३ १ १ १ १ २ १
हो३वा। रयिमर्षशतस्पृहा२३४५म्। रयिमर्षा। शता
२ २ ५ २ २ १ र २ १ २ ३ १ १ १ १ १ २
स्पृ३हाम्। औ३हो३वा। इन्दोसहस्रभर्णसा२३४५म्।
र १ २ २ ५ २ २ १
इन्दोसहा। स्रभार्णा३साम्। औ३हो३वा। तुविद्यु।
२र १ ३ १ १ १ १ १ २ १ २ २
म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासा३हाम्।
५ २ २ २ र १ २ २ ५
औ३हो३वा ॥(१) वयन्तेआ। स्यराधा३माः। औ३
२ २ १ र २ र १ ३ १ १ १ १ २ र
हो३वा। वसोर्वसोपुरूस्पृहा२३४५:। वसोर्वसाउ
१ २ २ ५ २ २ १र २ र ३ २
पुरूस्पृ३हाः। औ ३ हो ३ वा। निनेदिष्ठतमाइषा१:।
२ र १ २ २ ५ २ २ १र
निनेदिष्ठा। तमाआ३यिषा:। औ३हो३वा। स्याम
२र र र २ ३ १ १ १ १ २र र १ २
सुम्ने तेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्रा३यि

* ऊ० गा० ५प्र० १ख० ६मा०।

२ ५ २ २ १ र १ २ २
गा । औ३हो३वा ॥(२) परिस्वखा । नोआचा३रात् ।
५ १ २ १ २१२र१ २ ३१११११ २
औ३हो३वा । इन्दुरव्येमदच्युता२३४५ः । इन्दुरव्यायि ।
१ २ २ ५ २ २ १र २र १२र१र२३ २
मदाच्यु३ताः । औ३हो३वा । धारायऊर्ध्वाअध्वरार्श्यि ।
२र र र १ २ २ ५ २ २ र १र
धारायऊ । ध्वोआध्वा३रायि । औ३हो३वा । भ्राजा
र २३२ २र र १ २ २ ५
नयातिगव्ययू१ः । भ्राजानया । तिगाव्या३यूः । औ३
२ २ ५ २ २ ५ २ ५ २ ५
हो३वा । औ३हो३वा । ई३या । ई३या३४ । हा ।
२ २ ५
हाउवा३ । ऊ३२३४पा(३) ॥ ७ * ॥ [५]

१ २र र १ १ २ १
॥ औदलम् ॥ अभीनोवा । जासा२तमाम् । रयि
२ १ २ ३ ५ १ २र १
मर्षा३ । शातस्प२३४हाम् । इदोसदा । साभा२र्ण
१ २ १ २ १ ४ १
साम् । तुवायिद्यू२३म्ना३म् । वा२३यिभा३ । सा३४५
५ १ २ र १ १ २ १र
दो६५६हायि ॥(१) वयन्तेआ । स्पारा२धसाः । वसो
२ १ २ ३ ५ १२र १ १
र्वसा३उ । पूरुस्पं२३४हाः । निनेदिष्ठा । तामा२हूषाः ।

---

* ऊ० गा० ५प्र० १अ० ७सा० ।

२र १ २ १ ४ २ ५
स्यामसू२३म्ना३यि । ते२३आ३ । ध्या३४५यिगो६हायि ॥(२)

१ २ १ १ २ १ २ १ २
परिस्रवा । नोआ२श्वरात् । इन्दुरव्या ३यि । माद

३ ५ १र २र १ १ २र १र
च्यू२३४ताः । धारायऊ । ध्वोआ२ध्वरायि । भ्राजाना

२ १ ४ २ ५
२३या३ । ता२३यिगा३ । व्या३४५यो६हायि(३) ॥८*॥ [६]

३ १ २ ४र ५र २
॥ श्यावाश्वम् ॥ अभा३१यि । नो३वा । जसा । ता

४ ५ १ २ १
३मम् । एहिया । रा । यिमर्षशा । त । स्पृहा२म् ।

१र र १ २ ४ ५ २र
एहिया२ । इन्दोसहास्रा३भा३ । णा२३४साम् । ऐहा

१र १ २ ४ २
२यि । एहिया२ । तुविद्युम्नांवा३यिभा३ । सा३४५हो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म् । ते३अ । स्परा । धा३सः ।

५ १ र र २ १ १र
एहिया । वा । सोवसोपू । रु । स्पृहा२ः । एहिया

र १ २ ४ ५ २र
२ । निनेदिष्ठाता३मा३ः । आ२३४यिषाः । ऐहा२यि ।

१र र १ २ ४ २
एहिया२ । स्यामसुम्नायिते३आ३ । ध्या३४५यिगो६

* ऊ० गा० ५प्र० १ख० ८सा० ।

हायि ॥(१) परा३१यि । स्या३स्वा । नौत्र । त्रा३रत् । एहिया । आयि । दुरव्यमा । द । च्यु्ता२ः । एहिया २ । धारायऊर्द्वा३आ३ । धा२३४रायि । ऐहा२यि । एहिया २ । आजानयाता३यिगा३ । व्या३ ४ ५ योई्हा यि(३) ॥ १५ * ॥ [७]

॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम । रयिम । षष्ठा२३ता । ऊम्मा २१ऽ२ । स्पु्हमिन्दोभ्रहन्नमर्णसा२ ३४५म् । तुवा३उवा । द्यु्२म्नाम् । वा२३यिभा । स हाम् । औ२३होवा ॥(१) वयन्ते अस्यरा१धासाः । वसो वँ । सोपू२३ह्ह । ऊम्मा २१ऽ२ । स्पृहोनिनेदिष्ठतमा इषा१ः । स्यामा३उवा । सू्२म्नायि । ते२३आ । धि गा । औ३हो्वा ॥(२) परिस्यस्वानोआ१क्षारात् । इन्दु

* ज० गा० १२प्र० १अ० १५मा० ।

२ २ १ १ र र २र १ २र १र
र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायऊर्द्ध्वो

२ ३ २ २ २ १ २
अध्वरा१यि। भ्राजा३उवा। ना२या। ता२३यिगा।

१ ४ ५ ४
व्ययैः। औ२३द्दोवा। द्दो५ई। डा(३)॥ १६ *॥ [८]

२ र र र २र १ २
॥ निषेधम्†॥ अभीनोवाजा३सातमाम्। रयायिम

१ २ १ १ २ १ २ ४ ५ २
र्षा। शतस्पृद्दा२म। इ्हा३। आयिन्दो३साद्दा। हा

३ ५ २ १ २ १ २ १ २ ४
द्दो२३४द्दा। स्वभर्णा२३साम्। इ्द्दा३। तूवा३यिद्यु

५ २ ३ ५ ३ २ ४
म्नाम्। द्दाद्दो २ ३ ४ द्दा। विभा३सा५द्दा६५६म्॥(१)

२ र २र १ २ १ २ १
वयन्तेअस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा२ः।

१ २ १ २ ४ ५ २ ३ ५ २र १
इ्द्दा३। नायिने३दायिष्ठा। द्दाद्दो२३४द्दा। तमाआ

१ १ २ १ २ ४ ५ २ ३ ५
२३यिषाः। इ्द्दा३। स्यामा३सूम्नायि। द्दाद्दो२३४हा।

३र २ ४ २ र २
तेआ३धा५यिगा६५६उ॥(१) परिस्यस्वानो३अचरात्।

१ २ १ २ १ १ २ १ २ ४ ५
इन्दुरव्यायि। मदच्युता२ः। इ्हा३। धारा३याऊ।

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः"—इति ख० पु० पाठः।

२ ३ ३ २र १ २ १ २ १ २
हाहोर३४हा। छोश्रध्वार३रायि। इहा३। भ्राजा

४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहो२३४हा। तिगा३व्या५यू६५६:। हे२३

१ १
४५(३) ॥ १२ * ॥ [९]

५ र २ ४र५ ४र ५ २ १ २ १
॥ साधम् ॥ अभीनो३वाजसातमाम्। रयायिमर्षा

३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३

१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। तुवाश्रो२३४वा। द्युम्नाश्रो२३४वा। विभा५

५ २ ४ ५४र ५ २ १ २ १
सहाम् ॥(१) वयन्ते३अस्यराधसा:। वसोर्वसा २ उ।

३ २ ३ ५ १ र २ २ ३ २ २
पुरु३४५। स्पृ२३हा:। निर्नेदिष्ठतमाइषा१:। स्यामा

३ ५ १ २ ३ ५ ४र
श्रो२३४वा। सुम्नाश्रो२३४वा। तेश्रा५धिगाउ ॥(२)

५ २ ४ ५र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोश्रक्षरात्। इन्दूरव्या२यि। मदा३४५।

३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यू२३४ता:। धारायऊर्ध्वोश्रध्वरा१यि। भ्राजाश्रो२३४

* ऊ० गा० १७प्र० १अ० १२षा०।

५　　१ २ ३　　५　४　　४
वा।　नायाओर३४वा।　तिगा५व्ययू:।　ह्रोपुई।

डा(३)॥ १३ *॥ [१०]

४ ३　　४　२　४र
१॥ यज्ञायज्ञीयम्॥　अभाऽ५यिनः।　वाइजाइसाता

५　१　　२　१ २ २　　१　१
माम्।　रायिमर्षा।　माइतास्पृ्हाम्।　इन्दोरस।

२　१　　२　२　　१
द्वस्वा२३भा।　ऊम्मायि।　णाइसाम्।　हविद्युम्नंविभा

३ २　　१ २　　१र　र　र　र
२सद्वाउ॥(१)　हावा।　यन्तेअस्यराधसोवसोर्वसाउ।

२ १ ३ २　　१　१　　२　१
पू३रूस्पृ३ह्वाः।　निनेरदि।　ष्ठतार३माः।　ऊम्मायि।

२　२　　१　रर　३ २　　१ २
आ ३ यिषाः।　स्यामसुम्नेतेआ२ध्रिगाउ॥(२)　गोपा।

१　र र　　२ १ २　२　१र
रिस्यस्त्वानोअच्चरदिन्दुरव्यायि।　मा३दाच्यू३ताः।　धा

१　र　२　१　　२　२　१　र
रा२यः।　ऊर्द्ध्वो२३आ।　ऊस्मायि।　ध्वा३रायि।　भ्राजा

र　३ २　　१ १ १
नयातिगा२व्ययाउ।　वा३४५(३)॥ १४ †॥ [११]

---

* ऊ० गा० १७प्र० १ख० १३सा०।

† ऊ० गा० १७प्र० १ख० १४सा०।

२ र र र २र १

॥ स्वारकौत्सम् ॥ अभीनोवाजा३सातमाम् । रयि

२ २ २ र २ १२ २

मर्षशता१स्पृ३हाम् । इन्दोसहा३ । स्वा३भार्णा३साम् ।

१ ३ ५ ३ २ ३

आऽ२यि । तुविद्युम्नो२३४ह्वायि । विभा३सा५हा६५६म् ॥ (१)

२ र २र १र र २ २ २ र

वयन्ते अस्या३राधसाः । वसोर्वसोपुरु१स्पृ३हाः । निने

२ १ २ २ १ र ३

दिष्ठा३ । ता३मा आ३यिषाः । आऽ२यि । स्यामसुम्नो

५ ३र २ ४ २ र

२३४हायि । ते आ३धा५यिगा६५६उ ॥ (१) परिस्य स्वा

२ १ र २ २ २ र र

नो३अक्षरात् । इन्दुरव्यो मदा१च्यु३ताः । धारायऊ३ ।

२ १ २ २ १ र र ३ ५

र्ध्वो३आध्वा३रायि । आऽ२यि । भ्राजानयो२३४हायि ।

३ २ ४

तिगा३व्या५यू६५६:(३) ॥ १८ * ॥ [१२]

२ र र ३ ५ २

॥ कार्त्तयशसम् ॥ अभीहाहाउ । नो२३४वा । ज

१ २ २ ४ ५ २१ २ २ ४ ५

साओ३हो३तामाम् । रयायिमौ३हो३यि । आर्षा६ ।

५ २ १ १ २ १ र २ २

हाउवा । शतस्पृ्हा२म् । उपा । इन्दोसहस्रभा१र्णा

---

* ऋ० गा० १७प्र० १ख० १९षा० ।

३साम्। तुवऔ३हो३यि। द्युम्ना६म्। हाउवा। विभासहम्। उपा२३४५॥(१) वयꣳहाहाउ। ते२३४ औ। स्यराऔ३हो३। धासाः। वसाऔ३हो ३ यि। वासा६उ। हाउवा। पुरुस्पृहा२ः। उपा। निनेदिष्ठतमा१आ३यिषाः। स्यामाऔ३हो३यि। सुम्ना६हायि। हाउवा। तेअधिगो। उपा२३४५॥(२) परीहाहाउ। स्या२३४स्वा। नोआऔ३हो३। त्वारात्। इन्दूरौ३हो३यि। आव्या६यि। हाउवा। मदच्युता२ः। उपा। धारायजर्वीआ१ध्वा३रायि। भ्राजाऔ३हो३। नाया६। हाउवा। तिगव्ययूः। उपा२३४५(३)॥ १० *॥[१३]

॥ त्रीतन्त्वाष्ट्रीसाम† ॥ अभीनोवा। जसा३तमाम्। रयायिमर्षा३मता३। ए३। स्पृहमा। इन्दोसहा३स्वभा

* ऊ० गा० १८प्र० १ख० १०सा०। † "चतुर्म्रलाष्ट्री साम"—इति ख० पु० पाठः।

२ २ ३ २ १ १ २ १
३। ए३। णसमा। तुवायिद्युम्नाऽविभाइ। ए३।

२ ३ १
सद्दमा(१) ॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते—

प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ २ २ २ ३ १र १र
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥१ †॥

हे "सोम !" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३१र २र ३ १ २
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम !" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु ॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ ॥ २ ॥

---

* ऊ० गा० १८प्र० २ख० ८सा०।

† ऋ० आ० ५, १, ५, २ (१भा० ८७३पृ०)=ऋ० वे० ७, ५, २०, ४।

‡ ऋ० वे० ७, ५, २०, ५।

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [ विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन् ] यज्ञे "पवस्व" क्षर॥ ३ ॥ १७

२र २ र २ र १ ३
॥ धर्मम् ॥ औहोइवा। औहोइवा। औहोइवा
५र ५ १ २ र १र २ २ २ १र
२३४औहोवा। पवस्वसोममहान्समुद्राइः। पितादे२
१र १ २र १ र १ १ १ १ २ १ २ र १र
वाना२विश्व। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य
२र ३ १ १ १ १ २ १र २ १र २ १र १ १ १ १ २ १र
सोमा२३४५। दिवेपृथिव्यै शञ्चप्रजाभ्या२३४५ः। दिवो
२ १र २ १ २र ५र १ १ १ १ २ १र २ र १र २ ३
धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्म्मन्वाजीपवस्वा
१ १ १ १ १ २ र २ १ १ १ १ २ १र ३ २ २ १र
२३४५॥(१) पवस्वसोमा२३४५। महान्समुद्राइः। पिता
१र १ १ १ १ १ २र १ र १ १ १ १ २ १
दे२वाना२३४५म्। विश्वाभिधामा२३४५॥(२) शुक्र

* ऋ० वे० ७, ५, २० ६।

१ २ १११११ १र१र १र २ ११११ २१र १ १
पवस्वा२३४४ । देवेभ्यःसोमा२३४५ । दिवेपृथिव्या१यि ।
२१र ११११ २१र२१र ३ ११११ २ १ २र१र
शन्चप्रचाभ्या२३४५ः । दिवोधर्त्तासी२३४५ । शुक्रःपीयू
११११ २१र १२ २र१र २ ३ १ १ १ १
षा२३४५ः । सत्येविधर्म्मा१न् । वाजीपवस्वा२ ३ ४ ५ ।
२र २ २ १ २ ५र ५ २ १
औहोश्वा२ । औहोश्वा२३४औहो६वा । ए३ । धर्म्मा
१११
२३४५(३) ॥ ८ * ॥ [१]

२ २ १ २ १
॥ आन्धीगवम् ॥ पा१वास्वा । सो२३मा । ऊम्मा२
१र २१ २१र२र१र २ ११११ १ २
१ऽ२ । मह्वान्त्समुद्रःपितादेवाना२३४५म् । वायिश्वा३
२ १ २ १ २ ४ ५ ४
उवा । भा२३यिधा । मा । औ३होवा । हो५ई ।
डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १ ख० ९सा० ।

† ऊ० गा० २१प्र० ३ख० ८सा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति त्ऱृचात्मकं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ २ ३ १ २ ३ १ २ ३ १
प्रेष्ठंवोअतिथिᳬस्तुषेमित्रमिवप्रियम्।

२ ३ १ २ ३ १र २र
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुशनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने (भ्वा० प०) ऋतन्यञ्जि (उ० ४,२)"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेद्यो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"—"अग्निम्"—इति पाठौ ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति श्रौशनं प्रथममुक्थम्-इति वि०।

† छ० आ० १, १, १, ५ (१भा० १००पृ०) = ऋ० वे० ६, ६, ५, १ = य० वे० १३, ५१।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ ३ २ ३ १ २ ३ १ २
कविमिवप्रशꣳस्यंयन्देवासइतिद्विता ।
१२ ३१२ ३ १
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः । तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्य्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्त इत्यर्थः ] । तमग्निं स्तुषे इति पूर्व्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतसं"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ ३ २ ३ १२ ३१२
त्वंयविष्ठदाशुषोनॄꣳःपाहिशृणुधीगिरः ।
१ २ ३ १ ३ १२ ३१२
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

* ऋ० वे० ६, ६, ५, १ ।

† 'द्विता नाम ऋषिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, २ ।

हे "यविष्ठ" युवतम! [यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम!] इन्द्र! त्वं "दाशुषः" हविर्दत्तवतः "नॄन्" कर्म्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [नॄःपाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"—इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [त्मनेति सर्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्यं पालयितारं न विन्दामः त्वमेवास्मदीयम्॥

"शृणुही"-"शृणुधि"—इति पाठौ॥ ३॥ १८

१र१ १ २
॥ गायत्रमौशनम्॥ प्रेष्ठंवाः। अता २ ३ यिथीम्।

१र र २ १ २ १ २ २ १
स्तौषेमित्रम्। इवप्रा२३याम्। अग्नेंवरा३था३म्। ना

२ १ ५ ५ १ २ १ २
वा२३हा३४३यिदा२३४यो६हायि॥(१) कविमिवा। प्र

१ २ १ र २र १ २ १
शꣳसा२३याम्। यान्देवासः। इतिद्वा२३ यिता। नि

* "तुम्छन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायाम् "रक्षा"—दीर्घान्तः, तत्र द्व्यचः इति दीर्घः।

२ २ १ २ १ ५ ५
मात्तौ३ये३ । षूवा२३हा३४३यि । दा२३४वोई्हा ॥(२)

१ र १ २ १र २ १ र २ १र
तुवंयवायि । छदाघ्र२३षाः । नूडपाहिश्ट । एहौगा

२ १ २ २ १ २
२३यिराः । रक्षातो३का३म् । ऊता२३हा ३ ४ ३र्यि ।

१ ५ ५
त्मा२३४नोई्हायि(३) ॥ ११ * ॥ [१] १८

अथ त्र्यचात्मके द्वितीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २
एन्द्रनोगधिप्रियसत्राजिदगोह्य ।

३ २उ ३ १ २ ३ १र २र ३ २
गिरिर्नविश्वतःपृथुःपतिर्द्दिवः ॥ १ † ॥

हे "प्रिय" स्तोतॄणां प्रीणनकर ! "सत्राजित्"‡ महतां शत्रूणां जेतः ! हे "अगोह्य" केनापि गुहितुमशक्य ! "इन्द्र !" "गिरिर्न" पर्वत इव¶ "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

---

* ऊ० गा० ५प्र० १अ० ११सा० ।

† ऋ० आ० ५, १, १, ३ (१भा० ८०७पृ०) = ऋ० वे० ६, ७, १, ४ ।

‡ 'सत्राजित्—सदाजेता'—इति वि० ।

¶ 'गिरिर्मेघः अन्तरिक्षव्यापी अथवा गिरयः पर्वताः—इति वि० ।

हे इन्द्र ! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार मात्रा मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्ध्याः ; सुरया वृद्धाः तद्वत् ] धर्मन्त-नास्तिकाः । "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तवाश्रयन्तीत्यर्थः । "यदा" त्वं "नदनु" [ नद अव्यक्ते शब्दे ( भ्वा० प० ) ] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि । "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोता "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे भूयस इत्यर्थः ॥ २ ॥ ४

५ र ० ४र

॥ उस्यामचीयवम् ॥ अभ्रातृ३व्योअनातुवाम् । अ

१ २ १ र २ १ २र र १

नापाऽयिरा२यि । द्रजनुषासना२३इसायि । यूधेदापा

२ ५ र २ ४ ५

यि । त्वंमा२३यिच्छसाउ । वा३ ॥ (१) युधेदा३पित्वमि

२ १ २ १ र

च्छसायि । नकायिरा१यिवा२ । न०सखियायवा२३यि

१ १ २ १ २

न्दसायि । पायियन्तितायि । सुरा२.३श्वाउ । वा

५र २ ४र ५र २ १ २

३ ॥(२) पीयन्ता३यितेसुराश्वाः । ,यदाकाऽर्णो२ । षि

१ १ २ १ २

तदनु८समू२३हसायि। आदित्यितायि। वहू२३यमा

२र १११

उ। वा३। स्तौषे३४५(३) ॥ १०* ॥ ४

आत्वासहस्रमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

१ २ ० २ ३ २ ३ २ ० १ २र ३ १ २

आत्वासहस्रमाशतंयुक्तारथेहिरण्यये ।

२ २ ३ १ २ ३ २ ३ १ २ ३ १ २

ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ १‡ ॥

हे "इन्द्र!" "त्वा" त्वां "सहस्र" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह— युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्य (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूनामश्वानां शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

* ऊ० गा० ७प्र० १अ० १८खा०,

† 'अभीवर्त स्तोत्रीयम्'—इति वि०।

‡ ऋ० शा० ३, २, ६, २१ (१भा० ५०५पृ०) = ऋ० वे० ५, ७, १४, ५।

युजः" ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः । किमर्थम् इन्द्रस्य वहनम् ? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ २ २ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या ।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यौ विभूतिरूपा अश्वाः इन्द्रं मावहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्रं मावहतामिति प्रार्थ्यते—]"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति ( ७,१,३९ ) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र ! "त्वा" त्वाम् "आ वहताम्" । किमर्थम् ? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्राप्तव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

---

* ऋ० वे० ५, ७, १४, ५ ।

† 'शितिपृष्ठौ—नीलपृष्ठौ'—इति वि० ।

‡ 'अतिशयेन विवक्षितभूतस्य'—इति वि० ।

अथ तृतीया।

२ ३ १ १ २ ३ १ २ ३ १ २
पिबात्वा३स्यगिर्वणःसुतस्यपूर्वपाइव।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" चिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सह्यैन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते इष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'आसुतिरुपनिरित्यर्थः'—इति वि०।

॥ अभीवर्त्तम् ॥ आत्वा३सा२हस्रमाशतोवा। यूक्ता
रथे। हिरा१ण्या२यि। ब्राह्मयुजौ३१२३४। हरय
इ। न्द्रकायिशा१यिना२ः। वहान्तु१सोर२। मपा३यि।
ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा। हारी
मयू। रशायिपा१या२। यितिपृष्ठा३१२३४। वहता
म्मध्वोअन्धा१सा२ः। विवाक्षा१णा२। स्यपा३यि। ता
२३४५। या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा।
हुतस्यपू। वपाआ१यिबा२। परिष्कृता३१२३४। स्य
रसिनइ। यमास्ह१ता२यिः। चारुर्म्मा१दा२। यपा३।
त्या२३४५। ता२३४५यि(३) ॥ १५* ॥ १

॥ भारद्वाजम् ॥ आत्वासहा। स्रमाशा१ता२म्।
यूक्तारथेहिरण्यये। ब्रह्मायू१जा२ः। हारयइ। न्द्रका

* ऊ० गा० ७प्र० १ख० १५सा०।

२ १ २ १ ३ ५र र
यिशा१यिना २: । वद्दान्तू१मो२३ । मा२पा२३४औहो

३ ५ २र र १ २
वा । ता२३४ये ॥(१) आत्वारथायि । हिरा्ण्या१या २

१ र२र र र १ २ १ २र
यि । हारीमयूरशेप्या । शितायिपा१ष्ठा २ । वाहता

र१ २ १ २ १ ३
म । ध्वोआन्धा१सा २: । विवाहा१णा२३ । स्था२पा२

५र र ३ ५ २र १ २
३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वा

१ २ र र १ २ १
१णा २: । स्वतस्यपूर्वपाइव । परायिष्का१त्ता २ । स्था२

२ १ २ १र २ १ २
सिनइ । यमाह्व१ता २यि: । चारुम्मा१दा२३ । या२पा

५र र ३ ५
२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

२र १ २ १ २
॥ अभिनिधनं काण्वम् ॥ औहौहोहायि । आयाही ।

१ २ ३ ५ २ ३ ५ २ २ ५
आत्वा। सा२३४हा। स्तामाग्रा२३४ताम्। यूक्तारा२३४थायि।

२र १ २र १ ३ ५ २ ३
हीरण्ययायि । ऐहोयि । आ२३४यिही । आऽह्लायू२३

५ २ ३ ५ २र१र २र १ ३
४जो । हाराया२३४ई । द्राकेशिनाः । ऐहोयि । आ

* ऊ० गा० १८प्र० २श्व० १२ग्रा० ।

२३४यिही। वा इन्द्र२३४सो। मपा३यिता५या६५६यि॥(१)
औहोहोहायि। आयिही। आत्वा। रा२३४थायि।
हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।
ऐहोयि। आ२३४यिही। ग्रायितायिपा२३४ष्ठा। वा
हाता२३४म्मा। ध्वोअन्धसः। ऐहोयि। आ२३४यि
ही। वायिवत्ता२३४णा। स्वपा३यिता५या६५६यि॥(२)
औहोहोहायि। आयिही। पायिबा। तू२३४वा।
स्यागिवा२३४णाः। सूतस्या२३४प्र। वीपाइवा। ऐहो
यि। आ२३४यिही। पारिष्कृता२३४त्ता। स्यारासो२३
४नाः। इयमासुतायि। ऐहोयि। आ२३४यिही। चा
रुर्म्मा२३४दा। यपा३त्या५ता६५६यि। आ२३४
भो(३)॥३*॥[३]५

* ऊ० गा० ३१प्र० ३ख० ३सा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम् ।
३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विज ! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ० ), लोटि छान्दसो ( २, ४, ७२ ) विकरणस्य लुक्, "तप्तनप्तनथनाश्च ( ७,१,४५ )"—इति तस्य तबादेशः] । किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् ? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् चरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ १ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने ।
३ १ ३ २ ३ १ २ ३ १र १र ३ २ ३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

* ऋ० मा० ६, १, ४, ३ ( २भा० १२८४० ) = ऋ० वे० ७, ५, ३८, २ ।

† ऋ० वे० ७, ५, ३८, ३ ।

“सहस्रधारं” बहुधारोपेतं, “वृषभं” कामानां वर्षकं, “पयोदुहं” क्षीरवत् सारभूतं रसं सिञ्चन्तं “प्रियं” प्रीणयितारं सोमं “देवाय” देव-सम्बन्धिने “जन्मने”* देवेभ्यस्तदर्थम् अभिषुणुत। “ऋतजातः” उदकाज्जातः “यः” “राजा” सोमः “ऋतेन” वसतीवर्याख्येनोदकेन “वि वावृधे” विशेषेण वर्द्धते। कीदृशः? “देवः” द्योतमानः स्तोतव्यो वा, “ऋतं” सत्यभूतः, “बृहत्” महान्। तमासुनुतेति पूर्वेण समन्वयः॥

“पयोदुहम्”-“पयोवृधम्”—इति पाठौ॥ २ ॥ ६

३र ४र ५र २र ३ ४ ५ ५
॥ वाचःसाम ॥ आसोतापा। द्योरिषिञ्चता६ए।
१ २ र १ ७ १ २ ७
आश्वन्नस्तो। मामप्रा२म्। राजस्तुरम्। वानप्रा
१ ४ २ ५
चा२३म्। ऊ२३दा३। प्र२३४५तो६५हाइ(१) ॥११॥ [१]

३र ४र ५र २र ३ ३ ५ ५
॥ वाचःसाम ॥ आसोतापा। द्यो। रिषिञ्चता६ए।
१ २ र १ ७ १ २ १ ७
आश्वान्नस्तो। मामप्रुरा२म्। राजस्तुरम्। वानप्रा
१ ७ ४ २ ५ ३ ४ ५
चा२३म्। ऊ२३दा३। प्र३४५तो६हायि॥(१) वनप्र
२ ३ ४ ५ ५ १ २ १ ७
क्षाम्। द्यौयि। उदप्रुता६मे। साहस्रधा। राम्वृ

* ‘जन्मवतां मूलभूताय’—इति वि०।

† ऊ० गा० १प्र० २ख० १मा०।

१र २ १ ७ १ ४
षभा२। पायोदुग्धम्। प्रायन्दायिवा२३। या२३जा३।
२ ५ ३ ४ ५र २ ३ ४ ५ ५
न्मा३४५नोऽद्धायि॥(२) प्रियन्देवा। द्धो। यजन्मना६ए।
१र १ १ ७ १ र२र १र २
आर्त्तनयः। आर्त्तजाता२। वायिवावृधे। राजादा
१ ४ २
१ यिवा २३ः। आ २३ त्तो ३ म्। वृ३ ४ ५ द्धो ६
५
द्धायि(३)॥ १७ *॥ [२]

२र १र २ ४ ५ १ २ ५ २
॥ सफम्॥ आसोता३परि। षिञ्चा२३४ता। अ
१ २ १ १ २ ४ २ ५
श्वन्नस्तोमा२म्। अप्तुरा॰रा३जा३। स्तू३२ ३ ४राम्।
१ २ ४ २ ५ २ १ १
वना। प्रद्धामू३दा३। प्र ३४५नो६हायि॥(१) वनप्रा३
४ ५ २ ३ ५ २ १ १ १ १ २
हमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३
४ २ ५ २ १ र २ ४ २
यो३। दू३२३४द्धाम्। प्रियाम्। देवाया३जा३। न्मा
५ २ १ २ ४र५ २ ३ ५
३४५नो६हायि॥(२) प्रियन्दे३वाय। जन्मा२३४नायि।
२ १र२ १ १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३यि। वा३ २ ३ ४द्धायि।

* ऊ० गा० ७प्र० १ख० १७सा०।

२ १ २ १ ।   १र २ ४ २ ५
ऋतेनयाआ२ । तजातोवा३यिवा३ । वा३२३४ऱ्यायि ।
२ १र २ १   १ १ ४   २ ५
ऋतेनयाआ२ । तजातो३वा३ । यि । वा३२३४ऱ्यायि ।
२र १   र २ ४   २   ५
राजा । देवाआ ३ ताँ ३ म् । बृ३ ४ ५ हो ६हायि(३)
॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे —

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २   ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया ।
१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतृणामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा० ।
† स० आ० १, १, १, ४ (१भा० ९८४०) = ऋ० वे० ४, ५, २७, २ ।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्नि? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ १ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।
१ २ ३ २ १ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[अत्र मातृ-पितृ-शब्दाभ्यां भूद्यौश्चाभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।
२ ३ १ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

---

* "अचरन्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ "अक्षरे—अक्षीयमाणे स्थाने"—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः ! "विचर्षणे" विशेषेण द्रष्टः अग्ने ! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो

३ २ ३ २ ३ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम् ।

३ २ ३ १ ३ १ २ ३ १ २
सुतःपवित्रम्पर्य्येतिरेभन्

३ २३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्;] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः"["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्य्येति"

* ऋ० आ० ६, १, ४, ४ (२भा० ११५पृ०) = ऋ० वे० ७, ४, ११, १ ।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञ-गृहान् यथा पर्येति तद्वत् ॥ १ ॥

अथ द्वितीया।

३ १ २र ३ २ १ २
भद्रावस्त्रासमन्याऽ३ऽवसानो

२ २ २ ३ १ २ ३ १ २
महान्कविर्न्निवचनानिश‌ꣳसन्।

१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो

३ १ २र ३ १ २
विचक्षणोजागृविर्द्देववीतौ ॥ २* ॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्राम-योग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवच-नानि" नितरां वक्तव्यानि स्तोत्राणि‡ "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीति-र्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्यातिष्ठ [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्] ॥ २ ॥

---

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-सामलक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ २
समु प्रियो मृज्यते सानो अव्ये

३ १ २ ३ २ ३ १ २ ३ २
यशस्तरो यशसां क्षैतो अस्मे ।

३ १ २ ३ १ २ ३ १ २ ३
अभि स्वर धन्वा पूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पात स्वस्तिभिः सदा नः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितौ भवः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम् †] हे सोम ! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

॥ उद्वायिवासिष्ठम् ॥ उद्वायि । अस्या३ ४औ होवा । प्रेषा । हे३मना । पूयमानाः । देवा३४औ होवा । देवायि । भी३ःसम । पृक्तरसाम् । सुता३

* ऋ० वे० ७, ४, ११, ३ ।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि० ।

२र र १ २ १ २ ३ ४ ५ १ १
४औहोवा । पवायि । त्राइपरि । एतिरेभान् । मिता

३र र ५ १ २ १ १ १ ४
३४औहोवा । वसा । द्माइपशु । मा३४३ । तोइहो

३ १ ३र र४ ५ १ २ १
५ता६५६ ॥(१) भद्रा३४औहोवा । वस्त्रा । समनि ।

२ ३ ४ ५ ३ १ ३र ४र ५ १ २ १
यावसानाः । महा३४औहोवा । कवायिः । निवच ।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिभ्र९सान् । आवा३४औहोवा । च्यस्वा । चमुवोः ।

२ ३ ४ ५ ३ २ ३र ४र ५ १ ३र १
पूयमानाः । विचा३४औहोवा । त्रणो । जागृविः ।

२ २ ४ १ २ ३र ४र ५
दा३४३यि । वा३चा५यिता६५६उ ॥(२) समू३४औहोवा ।

१ २ १ र २ ३र ४ ५ ३ २ ३र ४र ५
प्रियो । मृज्यते । सानोअव्यायि । यशा३४औहोवा ।

१ १ १ र २ ३र ४ ५ ३ २ ३र ४र ५
स्तरो । यशसाम् । सैतोअस्मायि । अभा३४औहोवा ।

१ २ १ र २ ३ ४ ५ ३ २ ३र २ ४ ३र
स्वरा । धनुवा । पूयमानाः । उरुवायि । यूया३औ

४र ५ १र २ १ १ २ ४
होवा । पाता । सुवस्ति । भा३४३यिः । सा३दा५

ना६५६(३) ॥ ६ * ॥ [१] ८

---

* क० गा० ७प्र० २ख० ६सा०

अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ २ ३ १ २ ३ २ ३ २ ३ १ २
एतोन्विन्द्रꣳस्तवाम शुद्धꣳशुद्धेनसाम्ना ।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हत्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धाख्यादकेन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः। पश्चात् पूतायेन्द्राय यागादि-कर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाट्यायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो ऽमन्यत सोऽकामयत शुद्धमेवमामन्नं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तु-वन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति। तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव। आगत्य च "शुद्धेन" शुद्धत्याद-केन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम। ततः "साम्ना" शस्त्रैश्च "वावृद्वांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्रं "शुद्धैः"

* छ० आ० ४, २, १, ९ (१भा० ७१४पृ०) =ऋ० वे० ६, ६, ११, २।

शुद्धात्पादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्दसीरः (८, २, १५ )"—इति मनुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ माद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ १ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धः शुद्धाभिरूतिभिः।
३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य ॥ २ * ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छतीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे ( दि० प० ) लोटि "बहुलञ्छन्दसि ( २, ४, ७६ )"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

---

* ऋ० सं० ६. ६, ३१. ३।

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १र २र ३ १ २
इन्द्रशुद्धोहिनोरयिꣳशुद्धोरत्नानिदाशुषे।
३ २ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजꣳसिषाससि॥ ३ * ॥ ९

हे "इन्द्र!" "शुद्धः हि:" [—अवधारणे †] शुद्धएव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्द्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः]॥ ३ ॥ ९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विन्द्रꣳस्तवा३मा। शु
२ १ १ २ २ १र
द्धꣳशुद्धे। न। साम्ना२। शुद्धायिरु३क्था३यिः। वा
५ ५ २ १र २ १ २ १
वा२र्द्धा२३४ꣳसाम्। शुद्धैरा२३शी। वान्ममत्तु। इडा

* ऋ० वे० ६, ६, २१, ४।

† 'हि तस्मादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय'—इति वि०।

‡ 'सिषासति—साधयसि'—इति वि०।

२३ ॥(१) इन्द्रश्रुद्दीनआगा३च्ची। श्रुद्दःश्रुद्दा। भिद्ध।
तायिभा२यिः। श्रुद्दोरा३यो३म्। निधा२रा२३४या।
श्रुद्दोमा२३मा। धीसोमिय। इडा२३ ॥(२) इन्द्रश्रुद्दो
हिनोरा३यीम्। श्रुद्दोरत्नानिदा। श्रुषा२यि। श्रुद्दो
वा३र्चा३। णिजा२म्ना२३४सायि। श्रुद्दोवा २ ३ जाम्।
सायिषासस्सि। इडा २ ३ भा ३ ४ ३। औ २ ३ ४ ५ई।
डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
तृतीयः खण्डः ॥ २ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

अग्ने स्तोमम्मनामहे सिध्रमद्य दिविस्पृशः।
देवस्य द्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २अ० १२मा०।

† ऋ० सं० ४, १, ५, २।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्ध" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ २ ३ २ ३ १र २र ३ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा ।

१ २ ३१ ३ १ २
सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति । "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः ।

१ २ ३ १र २र
त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

---

* ऋ० वे० ४, १, ५, ३ ।

† 'दैव्यं जनं—देवानां स्वभूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि० ।

‡ ऋ० वे० ४, १, ५, ४ ।

हे "अग्ने !" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि [ तथाहि यास्कः—"सप्रथाः सर्वतः पृथुः (निरु० नै० ६.७)"—इति ]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

३ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा
३ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी ।
२ ३ १ २ ३ १ २ ३ १ २उ ३
वनावसानोवरुणोनसिन्धु-
१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते । "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत् ।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि० ।

† 'पञ्चमस्याह्नः सम्पत्या मध्यन्दिनम्'—इति वि० ।

‡ ऋ० मा० ६, १, ४, ६ ( २भा० १२० पृ० )=ऋ० वे० ७, ३, २६, २ ।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणाम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३
शूरग्रामःसर्ववीरःसहावान्
१ २ ३ १ २ ३ १ २
जेतापवस्वसनिताधनानि ।
३ १ २ ३ १ ३ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्
२र ३ १र ३र ३ १ २
स्वषाढःसाह्वान्पृतनासुशत्रून् ॥ २* ॥

हे सोम ! त्वं "पवस्व" । कीदृशस्त्वम् ? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन् । कुत्र ? "पृतनासु" शत्रु-सेनासु । कान् ? "शत्रून्" ॥ २ ॥

---

* ऋ० वे० ७, ३, २६, ३ ।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि० ।

अथ तृतीया ।

३ १ २ ३ १ २ २ १

उरुगव्यूतिरभयानिकृण्वन्

२ ३ १र २र ३ १ २

त्समीचीनेआपवस्वापुरन्धी ।

१ १र २र ३ २ ३ १र १र

अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः

२र ३ २ ३ २ ३ १ १

सञ्चिक्रदोमहोअस्मभ्यंवाजान् ॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर । "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे । "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ ११

२ १ ऽ २ ३र २

॥ सम्पावैयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।

१ ऽ २ २ २ २ १ २ ३

इयार । ओ३हा३ए । अभिचिपा । छय३वष । णम्व

---

* "स्व"—इति ऋ० पाठः ।

† ऋ० वे० ७, ३, २६, ४ ।

‡ 'पुरं धारयितः'—इति वि० ।

¶ 'चिक्रदः—इब्दं कुर्वन्—इति वि

योधाम्। अङ्गोषिणाम्। पवाव। ग्मनवाणीः। व

नावसा। नो३वह। णोनसिधूः। विरत्नधाः। हय

ते। वा३४३। रीयाऽपाऽ६५६यि॥(१) शूरग्रामाः।

सर्ववी। रःसहावान्। जेतापवा। स्वा३सनि। ता

धनानी। तिग्मायुधाः। क्षिप्रध। न्वासमत्सू। षषा

ढःसा। ळ्हा३न्यृत। वा३४३। सूऽशा५ऽवू६५६म्॥(२)

उरुगव्य। ती३भर। यानिक्तणवान्। समीचीने।

आ३पव। स्वापुरन्धी। अपःसिषा। सा३नुप। सः

सुवर्गाः। ओ३वायि। ओ३वा। ओवा। इया२।

ओ३हा३इ। सञ्चिक्रदो। महीव। म्वा३४३। भ्या

वा५जा६५६न्(३)॥ १७*॥ [१] ११

---

* क० ग्रा० ७प्र० १ख० १७सा०।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः ।
२ ३ १ २ १ २उ २ १ ३ १ २ ३ १ २
त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः ॥ १* ॥

हे "इन्द्र ! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि । कथमस्य यशस्वित्वं ? तदाह— "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षात्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि । अतएवास्य यशस्वित्वम् ॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ २ १ २ ३ १ २ ३ १ २र
तमुत्वानूनमसुरप्रचेतसꣳराधोभागमिवेमहे ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन् ॥ २† ॥ १२

* छ० आ० ३, २, १, ६ (१ भा० ६१२४०)=ऋ० वे० ६, ६, १३, ५ ।

† ऋ० वे० ६, ६, १३, ६ ।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ"[—इत्यवधारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भागमिव" यथा, कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्तिर्यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, इष्टयशौ] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृन्ततेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)] ॥ २ ॥ १२

॥ अभीवर्त्तम् ॥ तुवा३मा३यिन्द्रयशाअसोवा। आज्जोषीश। वृसास्या१ता२यिः। हुवम्नृचा३१२३४। णिचऽ्स्यप्रतीनिए। कआयित्पूर१हु२। अनूत्ता१स्वार२। षणाइयि। धा२३४५। ता२३४५यिः॥(१) अनू३त्ता३स्व

* 'निश्चितुम्'—इति वि०।

५र ४ ५ १ २ १ २ १
र्षणीधृतौवा। भानुत्तस्व। षणायिधा१र्ता२यिः। ता
र २ ३ ४ ५ २ १ २ र १
मुत्वानू३१२३४। नमस्तुर। प्रचायिता१सा२म। राधो
२ ३ २ १ ३ १ १ १ १
भा१गा२म्। इवा३यि। मा२३४५। हा२३४५यि ॥(२)
५र४ २ ४ ५र ४ ५ १ र २र १ २
राधो३भा३गमिवेमहौवा। राधोभागम्। इवायिमा१
१ र १ ३४५र २ १ २
हा२यि। माहौवक्का३१२३४। तिःशरणा। तआआ१
१ २ ३र २ १
यिन्द्रा२। प्रतायिस्व१म्ना२। नोआ३। आ२३४५।
३ १ १ १ १
वा२३४५न्(३) ॥ १८* ॥ [१]

॥ द्विहिङ्कारम्वामदेव्यम्॥ २१ तुवमा२३यिन्द्रयशा४अ५रसा
१र र र र ऽ
यि। आज्जीषीशवसस्पतिस्त्वम्वृत्राणिहᳪस्यप्रतीनयायि
१ ३र २ १ १ २ १ १ ३र २
कआौहो३। ऊम्मा२। पू२३ह्व। भनुत्तस्वार्षणौहो३।
१ १ ४ ५ २ १ ४
ऊस्मा२। धृतायिः। औ२३होवा ॥(१) भनुत्ता२३स्व
५र १ र र र २
र्षणीधृतायिः। आनुत्तस्वर्षणीधृतस्तमुत्वानूनमस्तुराऽप्र

* ऊ० गा० ७प्र० २भ० १८सा०।

१र २ १ १ २ १र र र २ ३र
चोह्वो३। ऊम्मा२। ता२३साम्। राधोभागाऽमिवी
२ १ १ २ ४ ५ २र१र
द्वो३। ऊम्मा२। मद्या। ओ३द्धोवा॥(२) राधोभा
४ ५र १ र र र र र
३गमिवेमद्याथि। राऽधोभागमिवेमद्वेमहीवह्र्कृत्तिःशरणा
२ २र २ १ १ २ १र २
ऽतओद्धो३। ऊम्मा२। या२३यिन्द्रा। प्रतेसुम्नाऽन
२र २ १ १ ४ ५ ४
औद्धो३। ऊम्मा२। श्रवान्। औ२३द्धोवा। ह्वो५डु।
डा(३)॥७*॥ [२]

१२ १ २ १र २ र
॥यशम्॥ त्वमिन्द्रा। यशाः। असायि। ऋजो
१र २ १ २ २ २ ३२ १र
षीश्रवसः। पतायिः। त्वम्वृत्राणी३ह्ऌसिया। प्रती
१ २ १ ३ ५र र
नाए२। कद्वर्त्पूर्व२द्धो१। तस्व। पा२णा२३४औहो
३ ५ १२ १ २ १र
वा। धा२३४र्त्ताः॥(१) अनुत्तश्वा। अनुत्तश्वा। पणी।
२ र १ २ र २
धृतायिः। अनुत्तस्वर्षणी। धृतायिः। तमुत्वानू३नम
३ २ १ १ १र
सुरा। प्रावा२यि। नासा२म्। राधा२द्धो१यि।

क० गा० १६प्र० २ख० ७मा०।

भागम्। आ२यिवा२३४औहोवा। मा२३४हे ॥(२)

राधोभागाम्। राधोभागाम्। इवे। महायि। राधो

भागमिवे। महायि। महोवका३र्त्ति:शरा। णाता२

यि। आयिन्द्रा२। प्रता२यिहो१यि। सुम्ना। नो२

आ२३४औहोवा। आ२३४वान्(३)॥ १४ * ॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।

अस्य यज्ञस्य सुक्रतुम्॥ १ † ॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशिनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

* ऊ० गा० १८प्र० १ख० १४गा०।

† छ० आ० २, १, २, ९ (१भा० २८३ प०)=ऋ० वे० ६, १, १९, २।

अथ द्वितीया ।

२ १ २८ ३ १ २ ३ १ २ ३ २३ १ २
अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम् ।
१ २ ३ २ ३ १ २ ३ २ ३ २७ ३ १ २ ३ २
सनो मित्रस्यवरुणस्यसो अपामासुम्नंयक्षतेदिवि ॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्य ओषधि-वनस्पतय-स्तेभ्य एष जायत इति चतुर्थत्वम्§ । "नभ्रान्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीप्यन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्काम् अग्निं स्तौमीति शेषः । स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्न" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु । तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु ॥ २ ॥ १३

२ ४ २ ४ ५
॥ साध्यम् ॥ याऽ५जि । छन्वाइवाइवाइवृमन्नायि ।
२र१र र र २ १ र १ ७
देवन्देववाह्योतारइराम् । आमर्त्तियम् । आस्ययाम्मा

---

* "ऊर्जीनपातं"—इति ऋ० पाठः ।

† "अग्निंमीड"—इति च ऋ०-पाठः ।

‡ ऋ० वे० ६, १, २९, ४ ।

¶ ऋग्वेदीयपाठमवलम्ब्येदं व्याख्यानम् ।

§ "अपां नपातम्—अपां पौत्रमग्निम् । अपो पुत्रका वृक्षाः, तेषु सञ्जातं पुत्र-पौत्रम्"—इति वि० ।

१ ४ २ ५ २
२३ । ष्या२३सू३ । क्रा३४५तोइ्हायि ॥(१) आऽ५ष्य ।
४ २ ४ ५ ३ १२ २ २ १२
यज्ञा३ष्या३स्तुक्रतूम् । अपान्नपातᳫंसुभा२३गाम् । सुदी
२ १ ७ १ ४ २
दितिम् । आग्निमूश्रे२३ । ष्ठा२३शो३ । चा३४५यिषो
५ ३ ४ २ ४२ ५ १
इ्हायि ॥(२) आऽ५ग्निम् । उश्रे३ष्ठा३शोचिषाम् । स
२ २ १ २ २ २ १ ७
नोमित्रस्यवरू२३णा । य्यासोअपाम् । आसुम्नाया२३ ।
१ ४ २ ५
चा२२ता३यि । दा३४५यिवोइ्हायि(३) ॥ २* ॥ [१]

२ २ १ २ २ १ २
॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वावबृमाहायि । देवन्देव
२ २ २
त्राहोतारममर्त्तियाम् । अस्ययज्ञस्यसुइ्हा । अस्ययज्ञ
१ ५ ४ ५
स्यसूऽइ्हा । ऊयायि । ऊवो२३४वा । क्रा५तोइ्हा
२ १ २ १२ २
यि ॥(१) अस्यायज्ञस्यसुक्रातूम् । अपान्नपातᳫंसुभगᳫं
२ २ २ २ २
सुदीदितायिम् । अग्निमुश्रेष्ठशोइ्हा । अग्निमुश्रेष्ठाशो
५ ४ ५
ऽइ्हा । ऊवायि । ऊवो२३४ । वा । चा५यिषोइ्हा

* ऊ० गा० ८प्र० १ख० ३गा० ।

यि ॥(२) यग्निमुग्रेष्ठशोचायिषाम्। सुनोमित्रस्यवरुण
सोधपाम्। आसुम्नंयक्षताऽइहा। जथायि। जवोर
३४। वा। दा५यिवोईहायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे—

यमग्न इति दृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

यमग्नेपृत्सुमर्त्त्यमवावाजेषुयञ्जुनाः।
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने!" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्त्यं" यजमानम्
"अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु
"जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्न-

---

* ऊ० गा० १८प्र० १ख० २सा०।

† "स्वाहा"—इति यजुर्याधिकः पाठः।

‡ ऋ० वे० १, १, २३, १ = य० वे० ६, २९।

आनि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पद्दादिषु मांसपृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्ययः, यद्वा लेटाऽडागमः, "इतश्च (३, ४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यडागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्य सहन्त्य पर्येता कयस्य चित्।
१ २ २ १ २
वाजो अस्ति श्रवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २ ॥

* ऋ० वे० १, १, २३, १।
† 'वाजमन्नं'—इति वि०।

अथ तृतीया।

१र २र ३ १ २ ३ १ २ ३ १ २
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।

१ २ ३ १ २
विप्रेभिरस्तुसनिता॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात्"ग्रसित-स्कभित-(७, २, ३४ )—इत्यादौ तृजन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० ८, १, १३, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

अथ साकमुक्ष इति त्र्यात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२ १२ २ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो
२ ३ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः ।
२ ३ १ २ ३ १ र २ र ३
हरिःपर्यद्रवज्जाःसूर्य्यस्य
१ २ ३ २ ३ २ ३ २
द्रोणन्ननक्षेअत्योनवाजी ॥ १* ॥

"साकमुक्षः" सह युगपत् सिञ्चः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोध-नालङ्करणयोः ( अदा० प० ) ]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [ अङ्गुलि-नामैतत् ( निघ०२, ५, ७ ) ] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [ सूर्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम् ] "अत्यः" अतनशीलः "वाजी न" अश्वइव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्षे" व्याप्नोति [ नक्षतिर्व्याप्ति-कर्मा ( निघ० २, १८, २ ) ] ॥ १ ॥

---

* ऋ० आ० ६, १, ४, ६ (२भा०, ११६४०) = ऋ० वे० ७, ४, २, ६ ।

अथ द्वितीया ।

२ ३ २ ३ २ ३२ ३ १२
सम्मातृभिर्न्नशिशुर्वावशानो
३२ ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः ।
२ ३ १२ १२३ १ १ ३ १२
मर्य्योनयोषामभिनिष्कृतंयत्
३२ ३ १ २ ३ १ १
सङ्गच्छतेकलशउस्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते । तत्र दृष्टान्तः—"मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प० ) कर्म्मणि लिटि रूपम्] "मर्य्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [ गमेरकर्मकात् "समोगम्यृच्छिभ्याम् ( १, ३, २९ )"—इत्यात्मने पदम् ॥ २ ॥

* ऋ० वे० ७, ४, ३, २ ।
† 'आदित्यरश्मिभिः'—इति वि० ।

अथ तृतीया ।

२ ३र २र ३ २ ३ १ २ २
उतप्रपिप्यऊधरघ्न्याया

१ ३ १ २ ३ २
इन्दुर्धाराभिःसचतेसुमेधाः ।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो-नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्याययति [प्यायतेर्लिटि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते। ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः—"निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, २, २ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि० ।

॥ इन्द्रबद्धासितम् ॥ औहोवाचा ३ होयि। इन्द्रा। साकमुचो। मर्जय। तस्वसाराः। दशधीरा। स्या श्धीतू। योधनुर्चीः। हरिःपर्य्या। द्रवज्जाः। सूरि यस्या। द्रोणन्नना। सो३षति। यो३४३। ना३वा५ जा६ ५ ६यि ॥(१) सम्मातुभायिः। नभिष्टुः। वावशा नाः। वृषादधा। स्वे३पुरु। वारोमभ्रायिः। मर्यो मयो। षा३मभि। निष्कृतंयान्। मक्षक्तायि। क लशे। ऊ३४३। स्ता३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अन्नियायाः। इन्दुर्द्धारा। भी३:सच। तेसुमेधाः। मूर्द्धानङ्का। वा३:पय। साचमृषु। औ होवाचा३होयि। इन्द्रा। औभिश्रीणा। ती३वस्तु। भा ३४३यिः। ना३ना५यिश्मा६५६यिः(३) ॥ ७ ॥ [१]

* ऊ० गा० ८प्र० १ख० ७मा०।

॥ पार्थम् ॥ ओ३हो३होयि। साकमुक्षो। मर्ज्ज य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु चौः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न ना। ने३क्षति। यो३४३। ना३वा५जाइ५ईयि ॥(१) सम्मातृभायिः। नशिशुः। वावशानाः। वृषादधा। न्वे३पुरु। वारोअक्षायिः। मर्य्योनयो। षा३मभि। नि ष्कृतंयान्। सङ्गच्छतायि। कलशे। ऊ३४३। स्रो ३या५भाइ५ईयिः ॥(२) उतप्रपायि। प्या३ऊधः। अघि यायाः। इन्दुर्द्धारा। भो३:सच। तेसुमेधाः। मूर्द्धा नङ्गा। वा३:पय। साचमूषु। औ३हो३होयि। अभि श्रीणा। नी३वस्त्र। भा३४३यिः। ना३ना५यिक्ता६५६ यि:(३) ॥ ८ ॥ [२]

---

* ऋ० गा० १२प० १ख० ६मा०।

॥ औशनम् ॥ साकाम्। उक्षोमर्ज्जयन्ता। स्वसा
३राः। दशधीरा। स्याँ३धीत। योधनुत्रीः। हरिः
पर्य्यद्रवञ्जाःसू। रियार३स्या। द्रोणन्नना। से३ऋति।
यो३४३। ना३वा५जा६५६यि ॥(१) साम्मा। तृभिर्म्म
श्रिप्तुर्वा। वश्मा३नाः। वृषाटधा। न्वं३पुरु। वारो
श्वह्नायिः। मर्य्यीनयोषासभिनायिः। कृतार३यान्।
सङ्गच्छतायि। कलशे। ज३४३। स्वी३या५भा६ ५ ६
यिः ॥(२) उता। प्रपिप्यऊधरा। घिया३याः। इन्द
र्धीरा। भी३ःसच। तेसुमेधाः। मूर्द्धानङ्गावःपयसा।
चमू२३षू। अभिश्रीणा। ती३वसु। भा३४३यिः। ना
३ना५यिक्ता६५६यिः(३) ॥ ४ ॥ [३] १५

* ऊ० गा० १८प्र० २ख० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ।

३ १ २ ३ १ २ ३ २ १ २ ३ १ २

आपिर्नोबोधिसधमाद्येवृधे ऽ३ऽस्मा२ँअवन्तुतेधियः ॥१*॥

हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोर्विकारैः पयःप्रभृतिभिः श्रपण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" तृप्तो भव। अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ १ २ ३१२ २२ ३ १ २

भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

अस्मांश्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१६

* ऋ० चा० ३, ४, ५, ७ (१भौ० ४९५१०) = ऋ० वे० ५, ७, २५, १।

† ऋ० वे० ५, ७, २५, २।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः* तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्र्या० प०) माङि लुङि छान्दसत्वे लुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयताम् कुरु सर्वदा सुखिन एव कुरु ॥ २ ॥ १६

॥ अभीवर्त्तम् ॥ पिबा३सू३तस्यरसिनोवा। मात्स्वान इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा। दियेवा१द्वा२यि। अस्मा१३आ१वा२। तुता३यि। धा २३४५। या२३४५ः ॥(१) अस्मा१३आ३वन्तुतेधियोवा। आस्मा१अव। तुतायिधा१या२ः। भूयामता३१२३४ यि। सुमतौवा। जिनोवा१या२म्। मानास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'आयमयेत्यर्थः'—इति वि०।

३ २ १ ३ १ १ १ १ ५र ४ २
भिमा३। ता२३४५। या२३४५यि ॥(२) मान्ना३स्सा३
४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। आस्मा
२ ३ ४ ५र २ १ २
च्चित्रा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।
र १ २ ३ २ १ २ १ १
आनाःद्य१म्ना२यि। युया ३। मा २ ३ ४ ३। या २ ३
१ १
४ ५(३) ॥ ८* ॥ [१]

४ ३र ४ ३ ४ ५ ४ ५ र ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नश्वा
३र ४र ५ २ १र २
३४औहोवा। द्रगोमताऽ२ः। द्वा३१उवा२३। ऊ३४
५ ३र १ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।
२ र १ ३र २ ५ ३ २
दियेबाद्धं। द्वा३१उवा२३। ऊ३४पा। अस्मा
४ ५र ४ ५ ३ २ ४
२९अव। औहोवाहायि। तुमा३यिधा५या६५६ः ॥(१)
४ ३र ४ र ५र र ३ २ ३र ४ ५
अस्मा९अवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।
२ १र २ ५ ३ २र ४
तुतेधियाऽ२ः। द्वा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १ख० ८सा०।

ता। औहोवाहायि। हमतीवा। जिनोवायम्। हाउ१उवा२३। ऊ३४पा। मानाउस्तर। औहोवाहा यि। भिमाउतापूयाई५६॥(२) मानस्तरभिमातये। मा नः। स्तरा३४औहोवा। भिमातया२रयि। हाउ१उवा २३। ऊ३४पा। अस्मा३न्चित्रा। औहोवाहायि। भायिरवतात्। अभिष्टायिभिः। हाउ१उवा। ऊ३४ पा। आना३ःसुम्ने। औहोवाहायि। धुयाउमापूया ई५६। ऊ२३४५(३)॥१५*॥ [२]

॥ निषेधम् ॥ पिबासुतस्याउरसिनाः। मत्स्वानआ यि। इन्द्रगोमता२ः। इहा३। आपाउयिर्न्नोबो। हा होर३४वा। धायिसधमा। दियेवार३हायि। इहा३। आस्मा३ऽआवा। हाहोर३४वा। तुताउयिधापूयाई५

* ऊ० गा० १०प्र० १ख० १५सा०।

६ः। अस्मा३ अवन्तू३तेधियाः। अस्मा३ अवा। तुतेधि
यार२ः। इहा३। भूया३मातायि। हाहो२३४हा। सु
मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।
हाहो२३४हा। भिमा३तापुया६५६यि ॥(२) मानस्तर
भी३मातयायि। मानास्तरा। भिमातया२यि। इहा
३। आस्मा३स्वायित्रा। हाहो२३४हा। भायिरवतात्।
अभिष्टा२३यिभायिः। इहा३। आना३ःस्वस्नायि। हा
हो२३४हा। पुया३मापुया६५६। हे२३४५(३) ॥१६*॥[३]

॥ पृष्ठम् ॥ पिबा३सुतस्यरसिनाः। मत्स्वानइन्द्रगो
मता२३होइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ होइ
या। अस्मा३आ२३वा। तुतायिधा२ ३या ३ ४ ३ः ॥(१)
अस्मा३ अवन्तुतेधियाः। अस्मा३ अवन्तुतेधियार ३ हो

---

* ऊ० गा० १३प्र० १अ० १६गा० ।

इया। भूयामतेसुमतीवाजिनोवया२३ᳲहोइया। मा नस्ता२३रा। भिमाता२३या३४३यि ॥(२) माना३स्तर भिमातयायि। मानस्तरभिमातया२३यिहोइया। अस्मा ञ्चित्राभिरवतादभिष्टिभा२३यिहोइया। आनःसू२३म्ना यि। षुयामा२३या३४३। ओ२३४५इ। डा(३) ॥१२*॥[४]

॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ। ना२ः। इन्द्रा२गोमता२३ः। हाउ। आपिना२बो। धिसाधमा२। दियेवृधा२३। हाउ। अस्माᳲअवा २३। हा। तुते३होर२। या२३४औहोवा। धियज २३४५ ॥(१) अस्माᳲअवन्तुतेधियोस्मान्हाउ। आ२। वन्तू२तेधिया२३ः। हाउ। भूयामा२ते। सुमतीवा २। जिनोवया२३म्। हाउ। मानास्तरा२३। हा।

* ऊ० गा०,१६प्र० ०ख० १९सा०।

३ २ १ ३ ५र र २ ३ १ १ १ १
भिमा३होर। या२३४औहोवा। तयज २ ३ ४ ५ ॥(२)

२र र र र र १ १ १र
मानस्तरभिमातयेमानोहाउ। स्ता२ः। अभा२यिमा

२ १र र १ ७
तया२३यि। हाउ। अस्माभ्या२यित्रा। भिरावृता२

१ २ र १ ७
त्। अभिष्टिभा२३यिः। हाउ। आनाःसुम्ना २ ३ यि।

१ ३ २ १ २ ५र र १ ३
हा। षुया ३ हो २। या २ ३ ४ औहोवा। मयज

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३१र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ १† ॥

* ऊ० गा० १८प्र० २अ० १६सा०।
† छ० आ० ६, २, २, ७ (२सा० १८८४०) = ऋ० वे० ७, २, २३, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्व्येव्योमनि"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र २ १ १ ३ १ २
सभक्षमाणो अमृतस्य चारुण

३ २उ ३ १ १ ३ १ २
उभे द्यावा काव्येना विशश्रथे।

१ २ ३ २ ३ २ ३ १ २ ३
ते जिष्ठा अपो मꣳहना परिव्यत

१ २ १ २ १ १ २ ३ १ २ ३१
यदी देवस्य श्रवसा सदो विदुः॥ २*॥

* ऋ० वे० ७, १, २३, २।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहृतकारातिशयेन निमित्तेन प्रक्लेनोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "श्रवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जुसादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोऽमृत्यवो।

२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'श्रवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ २र ३ १
येभिर्नृम्णा च देव्या च पुनत
२र ३ १ २
आदिद्राजानम्मनना अगृभ्णत ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैः श्लाघनीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म्म-रहिताः अत-एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"—इति ण्यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सन्तु" रक्षन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यज्ञः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मननाः" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः॥ ३ ॥१७

॥ मारुतम् ॥ १ चा२ ३ ४यिः। ५र ४ ५र ४ ५र र अस्मैसप्तधेनवोदुद्रे।
४ ५ २ १र र २ र १
स्रोत्रायिरायि। सत्यामाशिरम्परमायि। वियोमानी२।

* ऋ० वे० ७, १, २३, ३।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

१र र २ १ २ ३ २
चत्वार्य्यन्याभुवना। निनिर्णायिजा२३यि। चारूणा२३
५ १र १ २र ५ २ ४ १
४यिवा। क्रेयहृतैः। आवा३ह्वर्पूता६५६॥(१) सा२३
५र र ४ ५र ४ ५ १र र र र
४ः। भक्षमाणोअमृतस्यचौ। चारूणाः। उभेद्यावाका
र २ २ र र र २
व्येना। विश्वआथा२यि। तेजिष्ठाअपोमꣳहना। परि
२ ३ ५ २ १ २र १ २
व्याता२३। यादीदा२३४यिवा। स्वश्रवसा। सादी३
४ १ ५ र४५र र
वापुयिदू६५६ः॥(२) ते२३४। अस्यसन्तुकेतवोअमौ।
४ ५ १र र र २र १ १र
होर्त्यावाः। अदाभ्यासोजनुषी। उभेआनू२। येभि
र र २ १ २ २ ५
र्नृम्णाचदेव्या। चपुनादा२३यि। आदिद्रा २ ३ ४जा।
२१ २र १ २ ४
नम्मनना:। आगा३म्णापूता६५६(३)॥ १२*॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः॥ ५॥

---

* ज० गा० ८प्र० १ख० १२सा०।

अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो
२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।
३ १र २र ३ १२ ३ २
अभीनरन्धीजवनꣳरथेष्ठा
३ १ ३ १ २ ३ १ २
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ । किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [ अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ ] । तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि० ।

अथ द्वितीया ।

३ १ १र ३ १ २ ३ ३ ३ २ २ १ २ ३ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम !" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय । किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्टु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय । अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय । तथा हे "देव" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३ १ २ ३ १ २ ३क १र ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम ! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

* ऋ० वे० ७, ४, १०, ५ ।

† 'चन्द्राणि—कान्तानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'--इति वि० ।

¶ ऋ० वे० ७, ४, २१, १ ।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एनमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ]॥ ३ ॥ १८

२ २ २ १र २
॥ पार्थम् ॥ ओ३वो३वोयि। अभिवायूम्। वी३

१ २ ३ ४ ५ २ १ २ १ र २ ३ ४ ५
तिप। षागृणाना:। अभिमित्रा। वरुणा। पूयमाना:।

२ र १ ३ १ २ ३ ४ ५ २ १
अभीनराम्। धी३जव। न९रथेष्ठाम्। अभिइन्द्राम्।

२ १ २ २ ४
वृषणम्। वा ३ ४ ३। आ३वा५३ ६ ५ ६ म् ॥(१)

२ १ २ १ २ ३ ४ ५ २ १र २ १
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनू:। स्वदु

र २ ३ ४ ५ २ १ २ १ र २ ३ ४
घा:। पूयमाना:। अजिचन्द्रा। भर्त्तवम्। नोद्दिर

५ २ १ २ १ २ २ ४
ण्या। अभियश्वान्। रथिन:। दा३४३यि। वा३सो

२ र १र २ १ २ ३ ४ ५
पुमा६५६॥(२) अभीनोआ। षा३दिवि। यावद्मी।
२ १ २ १ २ १ २ ३ ४ ५ २ १र
अभिविश्वा। पा३र्थिवा। पूयमानाः। अभियेना।
२ १ १ २ ३ ४ ५ २ २ २ १र
द्रविणम्। अश्ववामा। औ३हो३होयि। अभियर्षं।
२ १ २ २ ४
या ३ जमत्। आ ३ ४ ३। ग्रा ३ यिवा ५ ना ६ ५ ६ः
(३)॥ १४*॥ [१] १८

अथ† यज्जायथाइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्यमघवन्वृत्रहत्याय।
१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम्॥ १‡॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे "मघवन्" मंहनीय-धनवन् ! "इन्द्र !" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० २अ० १४सा०।

† 'उक्तोऽभिप्लवः। उक्तः पृष्ठ्यः। उक्तोऽभिजित्। इदानीं स्वरसामानः'— इति वि०।

‡ ऋ० वे० ६, ६, १२, ५।

¶ 'अपूर्वगुण !'—इति वि०।

§ 'वृत्रहन्ता इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्देयम् इति वाक्यशेषः'—इति वि०।

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृढामकरोः । "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्येति पदम्] ॥

"उतोऽदिवम्"-"उतद्याम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र

तत्तेयज्ञोअजायततदर्कउतहस्कृतिः ।

१र २र ३ १ २ ३ २ ३ १उ ३ १ २

तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम् ॥ २* ॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत् । "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा०प०) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत । किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति, "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ १र २र ३ २

आमासुपक्वमैरयआसूर्य्यंरोहयोदिवि ।

३ १र २र ३ २ ३ २ ३ १ २ ३ २

घर्मन्नसामन्तपतासुवृक्तिभिर्जुष्टङ्गिर्वणसेबृहत् ॥ ३ † ॥ १९

---

* ऋ० वे० ६, ६, १२, ६ । † ऋ० वे० ६, ६, १२, ७ ।

हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [तथा च मन्त्रः—"आमासुचिद्दधिषे, पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान्] स्थापित वानसि ["चादि-लोपे विभाषा (८, १, ६२)"—इति पूर्वस्य ऐरयइत्यस्य न निघातः। अथ परोक्षतोऽर्द्धर्चः—] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तीक्ष्णीकुरुत [इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत्]। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्टं" प्रीतिकरं पर्य्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः॥ १*॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्य्यते सोमः,

---

* ऋ० वे० २, ४, १८, १।

तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'मदः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "मत्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता ; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्यन्त-शक्त्यतिशयो वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २उ ३ २ ३ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।

३ १ २ ३ १ २ ३ १र २र
सहावाꣳइन्द्रसानसिःपृतनाषाडमर्त्त्यः ॥ २* ॥

हे इन्द्र ! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम् ? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मद्दत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनाया अभिभविता अमर्त्त्यश्च भवेति ॥ २ ॥

---

* ऋ० वे० २, ४, १८, २।

अथ तृतीया ।

१उ ३ १ २ ३ २ ३ १ २ ३ १ २
त्वꣳ ह्यिङ्गूरः सनिता चोदयो मनुषो रथम् ।
३ २ ३ १ २ ३ २उ ३ २ ३ २ ३ १ २
सहावान्दस्युमव्रतमोषः पात्रन्नशोचिषा ॥ ३* ॥ २०

हे इन्द्र ! "त्वं" "हि" खलु "शूरः" शौर्य्योपेतः "सनिता" दातासि । अतः "मनुषः" मनुष्यस्य मे "रथं" रंहणं स्यन्दनं मनोरथं वा स्वर्ग-गमन-साधनं यज्ञार्थं रथं वा "चोदयः" प्रेरय । किञ्च त्वं "सहावान्" भूत्वा "दस्युम्" उपक्षयितारम् "अव्रतम्" अकर्म्माणम् अननुष्ठायिनम् "ओषः"† दह । किमिव ? "शोचिषा" दीप्त्या ज्वालया अग्निः "पात्रन्न" स्वाधारं पात्र-विशेषमिव यागाधिकारी सन् यो न यजते, तं देहीत्यर्थः ॥ ३ ॥ २०

५ २ ४ ५ ४र ५ २र १ २र १
॥ कालेयम् ॥ मत्सिया३पायितेमद्दाः । पात्रास्येवा ।
२ ३ २र १ १ ३र २ १ र र र
हरिवोमा२३ । त्सरोमदा३ः । वा२३४ । पातेवृष्णे ।
२ २ १र ३ २ २ ५ ४
आ३यिन्दूः । वाजायिसह्नौ । वा३४३ओ२३४वा । स्वसा
५र २ ४ ५ ४ ५ २ १ २ १ १ २
५तमाः ॥(१) आनस्ते३गन्तुमत्सराः । वृषामदो । वरे

* ऋ० वे० १, ४, १८, ३ ।

† 'ओषः पात्र' न—दीप्तः पात्र' न'—इति वि० ।

२ १ २ १ ५६ २ २
णिया२३ः । सद्दा३ । वा॒२३४ । इन्द्रसा । ना३सा

१ ३र २ २ ५ ४
यिः । पृतनाषौ । वा३४३ओ३४वा । अमा५र्त्तियाः ॥(२)

५ २ ४र५ ४ ५ २र १ २र १ ३ ३र २ १
तुव॒ह्यो३शूरःसनिता । चोदायोमा । नुषोरथा२३म् ।

२ १ ५ २ २ १र
सद्दा३ । वा२३४न् । दस्युम । व्रा३ताम् । ओषाः ।

३र २र २ ५ ४ ४
पाञ्चौ । वा३४३ओ३४वा । नशो५चिषा । द्यो५ई ।

डा(३) ॥ १६* ॥ [१] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
षष्ठ खण्डः ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १२ ॥

॥ इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठकः ॥ *

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे द्वादशोऽध्यायः ॥ १२ ॥

---

* ऊ० गा० २१प्र० १ख० १६सा० ।

† 'षष्ठस्य प्रपाठकस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० ।

१२२१२ २ ३ ११११ २र १ २ २
सनेमवाजपस्तियार२३४५म्। सनेमवा। जपास्ताश्याम्।
ऽ २ १ १ १ २ २
औ३हो ३ वा॥(२) परित्यꣳहा। र्यंताꣳहा३रायिम्।
ऽ २ १ १ १ १२र३ ११११ २
औ३हो३वा। बभ्रुम्पुनन्तिवारेणा२३४५। बभ्रुम्पुना।
१ २ २ ऽ २ २ १र२र१र २र १२ ३११
तिवारे३णा। औ३हो३वा। योदेवान्विश्वाꣳइत्परार३
११ २र२र र १ २ २ ऽ
४५यि। योदेवान्वायि। श्वाआयित्पा३रायि। औ३
२ २ १र२ १ २ ३११११ २र
हो३वा। मदेनसहगच्छतार२३४५यि। मदेनसा। ह
१ २ २ ऽ २ २ ऽ २ २ ऽ १
गाच्छा३तायि। औ३हो३वा। औ३हो३वा। ई३या।
ऽ २ ५ २ २
ई३या३४। हा। हाउवा३। ऊ३२३४पा(३)॥२०*॥[१३]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम्॥ इन्द्राऽ५य। सो३मा३पाता
५ १ र १ १ २ २ १ १
वायि। वाऽघ्नपा। री३षायिच्या३सायि। नरे३च।
२ १ २ २ १ र
दक्षा२३यिणा। ऊम्मायि। वा३तायि। वायिरायस
१ २ १ २ १र र र
दनारसदाउ॥(१) दायिताम्। सखायःपुरूरुचंवयंयू

* ऊ० गा० १४प्र० २खं० २०ता०।

अथ तृतीया।

२ १ १ ३ १ २ ३ १ २ ३ १
अधंत्विषीमाᳬअभ्योजसाक्रवि*युधा
२ ३ १र २र ३ २ ३ १ २
भवदारोदसीअपृणदस्यमज्मनाप्रवावृधे।
१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३
अधत्तान्यञ्जठरेप्रेमरिच्यतप्रचेतय
१ २ ३ २ ३ २ ३ १र २र ३ १र २र
सैनᳬसश्चद्देवोदेवᳬसत्यइन्दुःसत्यमिन्द्रम्॥ ३†॥२०

"अध" अथ सोमपानादनन्तरं "त्विषीमान्" इन्द्रः "ओजसा" बलेन "क्रविं" क्रवि-नामासुरं‡ "युधा" युद्धेन "अभ्यभवत्" अभिभूतवान्। किञ्च स इन्द्रः "रोदसी" द्यावापृथिव्यौ "आ अपृणत्" स्व-तेजसा समन्तात् पूरयामास। तथा "अस्य" पीतस्य सोमस्य "मज्मना" बलेन "प्र वावृधे" प्रकर्षेण वर्द्धते यद्वा, 'अस्य' क्रवेः असुरस्य 'मज्मना' सारेण 'रोदसी' अपूरयत् स इन्द्रः सोमं द्विधा विभज्य "अन्यं" भागं स्वकीये "जठरे" "अधत्त"। "ईम्" एनम् अपरं भागं देवेभ्यः "प्रारिच्यत" प्रारेचयत् [एतेनार्द्धमिन्द्राय अर्द्धमन्येभ्योऽपि देवेभ्य इत्युक्तं भवति।

* "क्रिविं"—इति क० पु० पाठः।

† ऋ० वे० २, ६, २८, २।

‡ 'क्रविं—कूपस्थानीयम्'—इति वि०।

२ १२ २ १ १ २ २
याम। चा३सूरा३याः। अश्शा२म। वाजा२३गा।
१ २ २ १ २ २ १ २
ऊम्मायि। धा३याम। सानेमवाजपा२स्तियाउ॥(२)
१ २ १ २ १ २ २
याम्पा। रित्यꣳहर्य्यतꣳहरिम्बभ्रुम्पुना। ती३वारे३णा।
१२ १२ २ १ २ २
योदे२वान्। विश्वाꣳ२३आ। ऊम्मायि। पा३रायि।
१ २ २ २
मादेनसहगार२च्छताउ(३)॥ २१* ॥ [१४]

१ ११ १ १ ११
॥ ऊर्द्ध्वत्वाष्ट्रीसाम॥ परित्यꣳहर्य्यतꣳहरायिम्। बा
१ ३ १ २ ५ १२२२१२ २२
भ्रू२म्पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वाꣳ
१२ ३ ११११ ३२२१ २१ १
इत्परा२३४५यि। मदेनसा। हगच्छा२३ता३४३यि॥(१)
१ २ १ २१ १ १२ ३ २
दिर्य्यम्पञ्चस्वयशसाम्। साखा२यो आ२। द्रिसा३ ४ ५।
१ ५ २१ १ १२ ३१११ १ ३ २ २
हा२३४ताम्। प्रियमिन्द्रस्यकामिया२३४५म्। प्रस्नाप
१ २१२ २ १ २ २ २ १२२१
या। तऊर्म्मा२३या३४३ः॥(२) इन्द्रायसोमपातवायि।
१ १२ ३ २ २ ५ १२२१
वार्त्रा२घ्नेपार। रिषा२३४यि। च्या२३४से। नरेचद

* क० गा० १४प्र० २ख० २१सा०।

यथाच तैत्तिरीयकम्—"यत् सर्वेषामर्द्धमिन्द्रं प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः"—इति]। हे इन्द्र! त्वं, "प्रचेतय" एवम्भूतं सोमं देवांश्च सम्यक् ज्ञापय प्रापयेत्यर्थः। अन्यत् पूर्ववत् ॥

"प्रचेतय"—इति विशेष-पाठः ॥ ३ ॥ २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १३ ॥

॥ इति षष्ठः प्रपाठकः* ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे त्रयोदशोऽध्यायः ॥ १३ ॥

———000———

* 'षष्ठः प्रपाठकः परिसमाप्तः समाप्तश्चैतद्ग्रामगेयगानसमम्'—इति वि०।

२र १ १११११ ३र र ११ ११र २
च्चिणावतार२३४५यि। वीरायसा। दनासार२दा३४३यि।
१
ओ२३४५ई। डा(३) ॥ ८* ॥ [१५]

४ ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ परा५यित्यम्। हा३र्यो३त
५ १ २ १ २ २ १र १र
हारायिम्। बाभ्रुम्पुना। तो३वारे३णा। योदे२वान्।
२ १ २ २ १ र
विश्व२३आ। ऊम्मायि। पा३रायि। मादेनसहगा
२ २ १ २ १ र
२च्छताउ ॥(१) तायिद्वायिः। यम्पञ्चक्षयग्रसंसखा
र २ १ २ २ १ १
योआ। द्रो३साहा३ताम्। प्रिया२मि। द्रस्था २ ३
२ १ २ २ १ र २
का। ऊम्मायि। मा ३ याम्। प्राखापयन्तऊ २ म्मं
२ १ २ १र र र र र २
याउ ॥(२) याआयि। द्रायसोमपातवेवृत्रघ्नेपा। रो३
१ २ २ १ १ २ १
षायिच्या३सायि। नरे२च। दचा२३यिणा। ऊम्मा
२ २ १ र ३ २ १ ११
यि। रा३तायि। वायिरायसदना२सदाउ। वा ३४५ (३)
॥ ८† ॥ [१६]

---

* ऊ० गा० १७प्र० १ख० ८सा०।

† ऊ० गा० १७प्र० १ख० ६सा०।

२ १ ४
॥ असितोत्तरम् ॥ परायित्या२३ऌ ह्यर्य्यतऌहरिऌ
५ १ र २ १ २ २
ह्वाउ। बभ्रुम्पुनन्तिवारि २ ३ णा। योदेवा३न्वा ३ यि।
१ २ २ ५ १ २ २ २ १ ५
श्वाऌ इत्पार२३४रायि। मदेना३सा३। ह्वगोर२३४वा।
४ ५
क्वा५तोई ह्वायि(३) ॥ २* ॥ [१७]

२ १ २
॥ वाङ्निधनक्रौञ्चम् ॥ परायित्याऌ ह्वा३१२३४। र्यं
५ ३ २ २ १ २ ५र ३र
तम्। ह्वरा३यिम्। बभ्रुम्पुना३१२३४। तिवा। रे
२ २र १ २ र ५ ३ २
णा३। योदेवान्वा३१२३४यि। श्वाऌ इत्। परा३यि।
२ १ २ ४ २ १ २
मदेनामा३१२३। ह्वगा५च्छताउ ॥(१) दिर्यम्याञ्चा३
५ २ २ २ १र र २
१२३४। स्वय। भसा३म्। सखायोआ३१२३४। द्रि
५ ३ २ २ १ २ ५र ३
स ‌+ हता३म्। प्रियामायिन्द्रा३१२३४। स्यका। मि
२ २ १ २ ४
या३म्। प्रख्वापाया ३ १ २ ३। तऊ५म्मयाउ ॥(२)
२ १ २ ५र ३ २ २ १ र २
इन्द्रायासो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गे० १७प्र० २ख० १सा०।

५ २ २ २ १ २ ५र
३४। रिषि। च्यसा३यि। नरेचादा३१२३४। च्चिणा

२र १र २ ४
वता ३ यि। वीरायासा ३ १ २ ३। दना ५ सदाउ।

वा(३) ॥ ४* ॥ [१८] १८

अथ त्र्यचात्मके चतुर्थ-सूक्ते—

प्रथमा।

१२ १२उ १ २ १ २ ३ २ ३ १र २र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम!" "अश्वो न" अश्वइव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" क्षर॥

"महे"—"क्रत्वे"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१२ ३ १ २ १ ३ १ २ १ २ ३ १ २ ३ २ ३ १ १
प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

---

* ऊ० गा० २०प्र० २ख० ४सा०।

† छ० आ० ५, १, ५, ४ ( १भा० ८७४ पृ० ) ऋ० वे० ७, ५, २०, १०।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्वइव स्नापितः'—इति वि०।

¶ 'दक्षाय—समर्थाय अथवा दक्षिणे शीघ्रकर्मणे यजमानाय'—इति वि०।

§ ऋ० वे० ७, ५, २१, १।

"सोतारः" अभिषोतारः ऋत्विजः, हे सोम ! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति"। तदेवोच्यते— "महे" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५,५).यास्कः] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम् ॥

"प्रते"-"तन्वे"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳहरिम्मृजन्ति

३ १ ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम् ॥ ३† ॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजा मार्जयन्ति ॥ ३ ॥ १९

२र २ र २ र १
॥ विधर्म्मम् ॥ ओहोइवा। ओहोइवा। ओहो

---

* 'रसं—वीर्यम्'—इति वि० ।

† ऋ० वे० ७, ५, २१, २ ।

‡ 'शिशु'—शंसनीयम्'—इति वि० ।

¶ 'पवित्रे—वालमये'—इति वि० ।

२वा२३४ओहोइवा। पवस्वसोममहेदक्षाया २ ३ ४ ५।
अश्वोननिक्तोवा२जीधना२या२३४५। प्रतेसोतारोरसम्म
दाया२३४५। पुनन्तिसोमम्महेद्युम्नाया२३४५। शिशु
ञ्जज्ञान९हरिम्मृजन्तो२३४५। पवित्रेसोमदेवेभ्यइन्दू२३
४५म्॥(१) पवस्वसोमा२३४५। महेदक्षाया२ ३ ४ ५।
अश्वोननिक्ता१:। वाजीधना२या२३४५। प्रतेसोतारा
२३४५:। रसम्मदाया२३४५। पुनन्तिसोमा२३४५म्।
महेद्युम्नाया२३४५॥(२) शिशुञ्जज्ञामा१म्। हरिम्मृज
न्तो२३४५। पवित्रेसोमा२३४५म्। देवेभ्यइन्दू२३४५म्।
औहो३वा। २। औहो२वा२३४औहोइवा। ए३। विध
र्म्मा२३४५(३)॥ ४*॥ [१] १९

* ऊ० गा० ६प्र० १खं० ४सा०।

अथ तृचात्मके पञ्चम-सूक्ते—

प्रथमा।

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ २ २
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दुन्देवाअयासिषुः॥ १* ॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्गं" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति॥ १॥

अथ द्वितीया।

१२ २२ ३ १ २ ३२ ३ १ २
तमिद्वर्द्धन्तुनोगिरोवत्सꣳसꣳशिश्वरीरिव।
१२ २२ ३ १ १
यइन्द्रस्यहृदꣳसनिः॥ २† ॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तम्मित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्द्धयन्तु। तत्र दृष्टान्तः—"वत्सं"

---

* छ० आ० ६, १, १,१ ( २भा० ४३ पृ० )=इत्चैव १, २, १८, १ (३भा०१६३ पृ०) = ऋ० वे० ७, १, २०, ३।

† ऋ० वे० ७, १, २०, ४।

‡ 'हृदंसनिः—हृदिलाभः स्थितः'—इति वि०।

वालं "शिश्वरीरिव" यथा शिश्वर्यौ बहुपयस्कामातरौ वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ १
अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम्।
१ २ ३ १ १
वर्द्धा समुद्रमुक्थ्य ॥ ३* ॥ २०

हे सोम!" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" क्षर¶। अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं‖ "धुक्षस्व" प्रपूरय**। किञ्च हे "उक्थ्य" प्रशस्य! †† "समुद्रम्"‡‡ "वर्द्ध"¶¶ वर्द्धय ॥

"अर्षा नः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्"—इति च ॥ ३ ॥ २०

---

* ऋ० वे० ७, १, २०, ५।

† 'नः अस्मभ्यम्'—इति वि०।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि०।

¶ 'अर्ष—गच्छस्व द्रोणकलशम्'—इति वि०। मूले त्वर्षा इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ 'पिप्युषीं—पान-समर्थाम्'—इति वि०।

‖ 'सोमलक्षणं'—इति वि०।

** 'धुक्षस्व—दुग्धस्व'—इति वि०।

†† 'उक्था—उक्थानि सामानि'—इति वि०। एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात्।

‡‡ 'समुद्र—द्रोणकलशम्'—इति वि०।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः।

१ र १ २र १
॥ अध्यम्॥ उपोषुजा२तम्। अप्तुरोवा। गोभि
२१ २ ३ २ १ १र १र
र्भङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सि
२ १र १ र १
षाउवा। अधिया२॥(१) तमिद्वर्द्धा२न्तु। नोगिरो
२ १ २ १ २ ३र २ १ २ १
वा। वत्सᳬसᳬसायि। स्वरोरिवा। यइन्द्रस्यव। दा
२ १र १र
२३म्। सनाउवा। अधिया२॥(२) अर्षानःसो२म।
१ २ १ २ १ २ ३र २ १ र २
शङ्गवोवा। धुत्तस्वपायि। प्युषोमिषाम्। वर्हीसमु
१ २ १र २
द्रम्। ऊ२३। विश्ययाउवा। अधिया२। ए२३हिया
१
३४३। ओ२३४५ई। डा(३)॥ ५*॥ [१]

१ र २ र
॥ प्रतीचीनेडकाश्रीतम्॥ उपोष्जातम्। आ२
१ २ १ ३र २
प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। चाहो
१ र २ २ १ ४५
यि। इन्दुर्देवाआ३या। सिषूः। औ२३होवा॥(१)
१ २ १ २ १
तमिद्वर्द्धन्तु। नो२गिराः। वात्सᳬसᳬशि। स्वरायि

* ऊ० गा० ६प्र० १अ० १खा०।

१ २र २ १ २ २ १
रिवा२३४। हाहोयि। यद्दन्द्रस्याहा३ह्वीम्। सनायिः।

४ ५ १ र २ र १
औ२३होवा॥(२) अर्षानःसोम। शा२ङ्गवायि। धूक्ष

२ १ ७ ३र २ १ र
स्वपि। प्युषायिमिषा२३४म्। हाहोयि। वर्द्धासम्

२ २ १ २ ४ ५ ४ ५
द्रा३म्। क्षियया। औ३होवा। ई३डा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-

एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डेः‡—

आयायेअग्निमिति त्र्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ २ २ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आघाये अग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्।

२ ३ २ ३ २ ३ १ २
येषामिन्द्रोयुवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० २ख० ११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ ऋ० भा० २, १, ७, ९ ( भा० ३ ?० पृ० —ऋ० वे० ६, ६, ४२, १ = य० वे० ७, ३२।

"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्"आनुपूर्व्येण "बर्हिः स्तृणन्ति"॥ १ ॥

अथ द्वितीया।

१ २उ  ३ १ २ ३ १ २ ३ २  ३ १र  २र
बृहन्निदिध्म एषाम्भूरिशस्तं* पृथुः स्वरुः।
२ ३ २ १ २ ३ १ २
येषामिन्द्रो युवा सखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्त" स्तोत्र-स्वरूपञ्च "पृथुः" महान्। सिद्धमन्यत् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ ३ २उ ३  २ ३ १ २ ३ १ २
अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः।
२ ३ ३ १ १ ३ १ २
येषामिन्द्रो युवा सखा ॥ ३ ‖ ॥ २१

* "शस्त"—इति ऋ०-पाठः।

† ऋ० वे० ६, ३, ४२, २।

‡ 'येषां—यजमानानाम्'—इति वि०।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि०।

‖ ऋ० वे० ६, ३, ४२, ३।

"युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः कश्चित् "अयुद्ध इत्" प्रागयोद्धैव सन् "युधावृतं" योद्धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मीयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ ३ ॥ २१

॥ ऐध्मवाहाद्यम् ॥ आघायेअग्निमिन्धाताये। स्तृणन्तिबर्हिरानुषाक् ॥(१) बृहन्तिदिधाआयिषाम्। भूरिशस्तम्पृथुःस्वरुः ॥(२) अयुद्धइद्युधावार्तीम्। शूरआजतिसत्वभायिः। येषामिन्द्रोयुवाइसा। ऊवायि। ऊवो२३४। वा। सा५खोईहायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

यएकइद्विदयतेवसुमर्त्तायदाशुषे।
ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

---

* 'आजक्षेपणे'—इति वि० ।

† ऊ० गा० ६प्र० १अ०' ६गा० ।

‡ छ० आ० ४, २, ५, ८ ( १भा० ७९८ पृ० )=ऋ० वे० १, ६, ६, २ ।

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति क्षिप्र-नाम (निरु० नै० ५, १७)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः। एवम्भूतः स "इन्द्रः" क्षिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति॥ १॥

अथ द्वितीया।

१ २ १ २ ३१२ २ ३ १ २ २ ३ २
यश्चिद्धित्वाबहुभ्यआसुतावाꣳआविवासति।

२ ३२ ३२ ३ २ ३१ २ ३ २
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग॥ २*॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति [विवासतिः परिचरणकर्म्मा (निघ० ३, ५, १०)] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग"‡ क्षिप्रं "आ पत्यते" आपतयति प्रापयति॥ २॥

---

* ऋ० वे० १, ६, ६, ४।

† 'चित्-हि—इति पदपूरणौ'—इति वि०

‡ 'अङ्गशब्दः पुनरर्थो'—इति वि०।

अथ तृतीया।

३ १र २र ३ १ २ ३ १र २र
कदामर्त्तमराधसम्पदाक्षुम्पमिवस्फुरत्।
२ १ २ ३ २ ३ १ २ ३ १
कदानःशुश्रवद्गिरइन्द्रोअङ्ग ॥ ३* ॥ २२

"अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टारमित्यर्थः†। एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति? यथा अहिच्छत्रं मण्डलाकारेण गयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [ स्फुरति-स्फुलतीति बध-कर्म्मसु ( निघ० २,१८,१५-१६ पठितत्वात् ) ]। "नः" अस्माकं यष्टॄणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रावत्" श्रोष्यतीति वितर्क्यते [ अत्र निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते ❋❋❋ कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग ( निरु० नै० ५, १७ )" -इति क्षिप्र-नामैतत् ॥ ३ ॥ २२

२र र २ १
॥ त्रैककुभम् ॥ यएकइद्विवायाऽ३ताथि। वासुमर्त्ता
२ २ १ ३ ५ १ २र र १ १
याऽ३दा। ऊम्। प्रू२ ३ ४षाम्। आयिशानोअप्रति

* ऋ० वे० १, ६, ६, ३।

† 'यस्य यज्ञार्थं राधसम्पन्न न भवति, सोऽराधः'—इति वि०।

‡ 'क्षुम्पम् प्रचीपणीयं दुर्बलं मत, यथा सर्द्दणि बलिनः'—इति वि०।

१ २र २र ११ ३ ५
श्कुतः। आयिशा। नोअप्रतायि। श्कु२३४ताः ॥(१)
२ र २ १ २ र २ २ १
यश्चिद्धित्वा। बहुभ्या३भ्या। सुतावा२आवी३वा। ऊम्।
३ ५ २१ २ र १२ १ २ ३ २ १
सा२३४तायि। उग्रन्तत्पत्यतेशवः। ऊग्रम्। तत्पत्यता
३ ५ २ र र २ १ र
यि। शा२३४वाः ॥(२) कदामत्तमराधा३साम्। पदा
२ २ १ ३ ५ ११र २
क्षुम्यामो३वा। ऊम्। स्फू२३४रात्। कदानःशुश्रव
१ १ २र ३ २ १ ३ ५ १
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः। आ
२र १ ३ ५र र ३
यिन्द्रोअ। गा २। या २३४ औचोवा। ई२३४
५
न्द्राः(३) ॥ ७* ॥ [१] २२

अथ गायन्तीति-तृचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

१ २ ३ १र १र ४ २ ३ १ २
गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।
३ १ २ ३ १ ३ १ २
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे ॥ १‡ ॥

---

* ऊ० गा० ६प्र० १ख० ७सा०।

† 'तृतीयमुक्थ्यम्'—इति वि०।

‡ छ० आ० ४, २, १, १ (१भा० ६९४ पृ०) = ऋ० वे० १, १, १९, १।

हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति ते ऽर्कमर्किणो ब्रह्माणस्त्वाशतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनच्छ्रयतइति वेति" (निरु० नै० ५,५)। अर्क-शब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति संवृत्तः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १र २र३ १र २र ३ १ १
यत्सानोस्सान्वारुहोभूर्य्यस्पष्टकर्त्वम्।
२उ ३ १ १ ३ १ २ ३ १ २
तदिन्द्रोअर्थञ्चेततियूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरूढवान्।

* ऋ० वे० १, १, १८, २।

तथा "भूरि" बहुकर्म यागरूपम् "असृष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृष्णिः" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† अस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठौ॥१॥

अथ तृतीया।

१ २उ १ २ ३ १ ३ १ २ ३ २
युङ्क्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा।

१ २ ३ १र ०र
अथान इन्द्र सोमपा गिरामुपश्रुतिं चर॥३‡॥ २९

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व¶ हि" § सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्रदेशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, ३=ऋ० वे० ८, ३४।

¶ संहितायां "युङ्क्ष्वा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०

"कक्ष्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कक्ष्यः,तस्य पूरको पुष्टाङ्गा-वित्यर्थः ॥

"युङ्क्षा"-"युक्ष्वा"—इति पाठौ ॥

युङ्क्ष्वा—सति शिष्टत्वेन प्रत्यय-स्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्या-कारादेशः। वृषणा—वृषु मृषु सेचने (भ्वा० प०) "कनि-न्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्,"ञ्नि-त्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वाषपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्व-वदाकारः (७, १, ३९)। कक्ष्यप्राः—कक्ष्ययोर्भवं कक्ष्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृति स्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहि-तायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)" —इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रि-तस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-

वेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्तिरु-
दात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ),
श्रुति-शब्देन प्रादिसमासे तदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-
चनितिकृत्यचौ इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः
पर-निपातः॥ ३॥ २३

१र २र र १२१
॥ उद्वंशीयम्॥ गायन्तित्वागायत्रिणाऽऽ। अर्च्च
२ १र
न्त्यर्कमर्का२३यिणाः। ब्रह्माणस्त्वा२हो१यि। शतक्रा२
२ १ १ २ २ ३ ५
३ताउ। उद्वंशमिवया१यिमो३रे। उद्वंशा२३४मो।
१ऽ २ २ १ २ १र
वाया३उवा३। उप्। माऽयिरो३५ह्वायि॥(१) यत्सा
२र र र २१ र २ १
नोस्सान्वारुहआ। भूर्य्यस्पष्टकर्त्तूर३वाम्। तदिन्द्रा
र २ र१र २ २
२हो१गि। अर्थंचेता२३तायि। यथेनवृष्णिरे१यिजा३
२ रर ३ ५ १ ऽ २ २ १
तायि। यूथेना२३४वृ। ष्णायिरा३उवा३। उप्। जा
२ २१र २र१ २र१ २र१ र
ऽरतो३५ह्वायिः॥(२) युञ्जाहिकेशिनाहरीआ। वृषणा
२ १र र २
कक्ष्यिया२३प्रा। अथानो२हो१यि। इन्द्रसोमा२३पाः।

गिरामुपश्रुता१यिञ्चा३रा। गिरामू२३४पा। श्रूता३उ

वा३। उप्। चा५२रो३५हायि(३) ॥ ८* ॥ [१]

॥ हिरण्यस्तस्त्वाष्ट्रीसाम ॥ गाय। तिला३। हा३

हा। गायत्रायिणा२३४ः। अर्च। तिया३। हा३हा।

कमर्क्कायिणा२ ३ ४ः। ब्रह्मा। णस्त्वा३। हा३हायि।

शतक्राता२३४उ। उद्द। ग्रमा३यि। हा३हायि। व

या३हो२३४। वा। मा५यिरो६हायि ॥(१) यत्सा। नो

स्सा३। हा३हा। नुवाद्दा२३४ः। भूरि। अस्या३।

हा३हा। ष्टकर्त्तुवा२३४म्। तदि। द्रोआ३। हा

३हा। यञ्चेताता२३४यि। यूथे। नवा३। हा३हा।

ष्णिरा३हो२३४। वा। जा५तो६हायि ॥(२) युङ्क्षा।

* ऊ० गा० ६प्र० १अ० ८सा०५ ।

३ १ २ २ ३ १र १ ५ १र
हिका३। हा३हायि। श्रिनाहारा२३४यि। वृष। णा
२ २ २ १ ५र ३ २
का३। हा३हा। चियाप्रा२ ३ ४। अथा। नआ३।
२ २ ३ २र १ ५र ३ २ २
हा३हायि। द्रसोमापा२३४:। गिराम्। उपा३। हा
२ ३ २ १ ५ ४ ५
३हायि। श्रुता३यि(ं)हौ२ ३ ४। वा। चा५रो६हा
यि(३) ॥ १* ॥ [२]

५र ३ २ ४र ५ १
॥ गौरीवितम् ॥ गाय। तित्वा३। गायत्रिणाः। अ
१ र २ ४
र्चन्त्यर्कमर्किणा२३:। ब्रह्माणस्त्वा३१२३। शता५क्रता
१ २ ४ ५ ४ ५
उ। ऊद(ं)शमा३१२३यि। वयोवा। मा५यिरो६हा
४ ५ २र २ ४ र ५ १र
यि ॥(१) यत्सा। नोःसा३। नुवारुहाः। भूर्य्यस्पष्ट
१ र २ ४
कर्त्तुवा२३म्। तादिन्द्रोआ३ १ २ ३। यूथेन५तताथि।
१र र २ ४ ५ ४ ५ ५ र
यूथेनवा३१२३। श्रिणरोवा। जा५तो६हायि ॥(२) युङ्क्ष्वा।
३ १ ४ र ५ १ र १
हिका३यि। श्रिनाहरायि। वृषणाकक्षियप्रा२३। आ

* ऊ० गा० १३प्र० १ख० १सा०।

र २ ४ १ र २
थानश्रा३१२३यि। द्रसो५मपाः। गायिरामुपा३१२३।

४ ५ ४ १
श्रुतोवा। श्वा५रोई३हायि(३) ॥ ५* ॥ [३) २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

———000———

* ऊ० गा० २१प्र० १अ० ५सा० ।

† 'द्वादशाहस्य नवममहः षट्चत्वारिंशत् स्तोमिकम्—इति वि० ।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०, मूल-पदपञ्चादिसम्मतञ्चैतत् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्ध इति चतुर्ऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २     ३ १ २ ३ १    २ ३ १ २
सुषमिद्धो‡न आवह देवाँ अग्ने हविष्मते ।
१ २     ३ १ २
होतः पावक यक्षि च ॥ १¶ ॥

हे "अग्ने !" "सुसमिद्धः" § एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं दशममहरग्निष्टोमः । * * * । तस्य वक्ष्यमाणं द्वितीय-प्रभृतीनां ...नामानमनुरूपं * * * नवकं सर्वं मधस्तादधीतमस्त्,—इति वि० ।

† इदानीं सुषमिद्धो न आवह इति इत्यष्टायानि भवन्ति—इति वि० ।

‡ "सुसमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, २४, १ ।

§ 'सुष्ठु समिद्धः सुसमिद्धः'—इति वि० । ऋग्वेदीय-पाठमवलम्बैवाय प्रतीक-ग्रहणं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धन्य-मध्यः सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६)"—इति च तत्र वचनम् ।

दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—सम: क्रियाविशेषणत्वेन गति-सञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "वि-शेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रिया-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव क्तदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दो-ऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनु-नासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवद् (८, १, ७२)"—इति पूर्वस्या-विद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधि-करण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्वम्,

* 'नः—अस्मभ्यम्'—इति वि०।

† 'यक्षि च—यक्ष भक्षणे, देवानावह भक्षय च'—इति वि०।

अतएवाविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः —इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यच्चि—यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४,७३)"—इति शपा लुक्, व्र... (८, २, ३६) षत्वम्. "षढोः कस्सि (८, २, ४१)"—इति कत्वम्, सेर्हिरादेशश्छान्दसत्वान्न भवति, शिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङतिङः (८, १,२८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदात्परत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादितिचेत् न, यच्चि पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८,१, ७३)"—इति तस्य नित्यमविद्यमानत्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यच्चि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदमविद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यच्चीति निघातः प्राप्नोत्येव? सत्यम्;——अत्र यच्चीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः ]॥ १ ॥

अथ द्वितीया।

१ २ २ २ ३ १ २
मधुमन्तन्तनूनपाद्यज्ञन्देवेषुनःकवे।
३ १ २ ३ १ २
अद्याकृणुह्यूतये ॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय॥

"ऊतये"-"वीतये"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ १ २ ३ २ ३ २ १ २ १ २र २र
नराशंसमिहप्रियमस्मिन्यज्ञउपह्वये।
१ २ ३ १ २
मधुजिह्वंहविष्कृतम् ॥ ३‡ ॥

"इह" देवयजनदेशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

* ऋ०वे० १, १, २४, २।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु० दै० २, ५-६।

‡ ऋ० वे० १, १, २४, ३।

सम्"*—एतन्नामकमग्निम् "उपह्वये" आह्वयामि । कीदृशम् ? "प्रियं" देवानां प्रीति-हेतुं, "मधुजिह्वं" मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
अग्नेसुखतमेरथेदेवाँ्ईडितआवह ।
२ ३ २ ३ १ २
असिहोतामनुर्हितः ॥ ४† ॥ १

इदं-शब्दाभिधेय हे "अग्ने !" "ईडितः" अस्माभिः स्तुतः सन्‡ "सुखतमे" अतिशयेन सुख-हेतौ कस्मिंश्चित् "रथे" "देवान्" स्थापयित्वा यज्ञ-भूमौ "आ वह" [ इट्-शब्दाभिधेयत्वमत्र सूचयितुमीडित इति विशेषणम् ] । "मनुर्हितः" 'मनुना' मन्त्रेण मनुष्येण वा यजमानादि-रूपेण 'हितः' अत्र स्थापितः त्वं "होता" देवानामाह्वातासि ॥ ४ ॥ १

---

* "नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति"—इत्यादि निरु० दै० २, ९-७ ।

† ऋ० वे० १, १, २४, ४ ।

‡ 'ईडितः—प्रीणितः'—इति वि० ।

अथ यदद्येति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ २ ३ ३ २ १ १ २ २ १ २ ३ २
यदद्यसूरउदितेनागामित्रोअर्यमा।
३ १ २ ३ १र २र
सुवातिसविताभगः॥ १† ॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयत् [ अथवा अनागा मित्रो अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु ] ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ २उ ३ १र २र
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।
२ ३ १ २ ३ १ २
येनोअꣳहोतिपिप्रति ॥ २‡ ॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [ प्र-शब्द आदरार्थः ]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा ? इत्युच्यते— हे "सुदानवः" सुदानाः! युष्माकं

* 'मैत्रावरुणमाद्यम्'—इति वि०।

† ऋ० वे० ५, ५, ८, ४।

‡ ऋ० वे० ५, ५, ८, ५।

"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमा-गत्य "नः" अस्माकम् "अंहः" पापम् "अति पिपृति" अतिपार-यथ, तेषां गमनइति ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
उतस्वराजोअदितिरदब्धस्यव्रतस्यये ।

३ १र २र
महोराजानईशते ॥ ३ * ॥ २

"उत" अपिच "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातु-मिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अद-ब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमत-धनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ २

---

* ऋ० वे० ५, ५, ९, १ ।

† 'अदितिः—अदीनत्व-सम्पन्नाः'-इति वि० ।

‡ 'महः—अभिमान-सम्पन्नाः'—इति वि० ।

¶ 'व्रतस्य—कर्मणः अन्नस्य वा'—इति वि० ।

उत्त्वेति तृचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा ।

१ २    ३ १ २    ३ १र २र

उत्त्वामन्दन्तु सोमाःकृणुष्वराधोअद्रिवः ।

१ २ ३ १ २

अवब्रह्मद्विषोजहि ॥ १ † ॥

हे इन्द्र ! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु । हे "अद्रिवः !" वज्रवन्निन्द्र ! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु ! किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" ॥

"सोमाः"–"सोम।"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २ ३ २ ३ २ ३ २ १ २    ३ १    २

पदापणीनराधसोनिबाधस्वमहाँ असि ।

१उ ३ २ ३ १ २

नहित्वाकश्चनप्रति ॥ २ ‡ ॥

"पणीन्" लुब्धान्¶ "अराधसः" यज्ञार्थ-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

---

* 'ऐन्द्रसाम्यम्'—इति वि० ।

† छ० आ० ३, १, १, १ ( १ भा० ४२१पृ० ) = ऋ० वे० ६, ४, ४३, १ ।

‡ ऋ० वे० ६, ४, ४३, २ ।

¶ 'पणीन्—पणस्वभावान्'—इति वि० ।

बाधस्व । हे इन्द्र ! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु ॥

"पणीमराधसः"-"पणीरराधसः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ १ २ ३ २ ३ १ र २ र
त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
२ उ १ २ १
त्व ँ राजा जनानाम् ॥ ३ * ॥ ३

हे "इन्द्र !" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि ॥ ३ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

* ऋ० म० ६, ४, ४३, ३ ।

† 'इन्द्राग्नी आगतमित्यस्याः कथाम'—इति वि० अतः परं अयमर्थमिति शेषः । 'उक्तं प्रातःसवनम्'—इति ध० वि० ।

अथ द्वितीय-खण्डे*—

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१२ ३१२ ३१ २ ३ २ ३ २ ३ १२
आजागृविर्विप्र ऋतम्मतीनाᳪ

२र ३ १ ३ २ ३ १ २
सोमःपुनानोअसदच्चमूषु।

१ २ ३ १ २ ३ २ ३ १ २
सपन्तियम्मिथुनासोनिकामा

३ १ २ ३ १ २ ३ १ २
अध्वर्यवोरथिरासःसुहस्ताः॥ १ †॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतानां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथुनासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्वर्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः‡]॥

"ऋतम्"-"ऋता"—इति पाठौ॥ १॥

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि०।

† ऋ० सं० ७, ४, १८, २

‡ 'सपति'—इति परिचरण कर्मसु (३.५) स्पर्शति कर्मसु च (२,१४) इत्यत्र निघण्टौ।

अथ द्वितीया ।

१ १ २ २उ ३ २ ३ १ २ ३
सपुनानउपसूरेदधान

१२ २र ३ १ २ ३ १२ १२
ओभेअप्रारोदसीवीषआवः ।

३ २ ३ १ २ ३ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती

३ १२ २र ३ २ ३१२ १२
सतोधनङ्कारिणेनप्रयꣳसत् ॥ २ * ॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति । किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति । तथा "सोमः" "आवः" स्व-तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) च्लेर्लुक्, "छन्दस्यपि दृश्यते (६, ४, ७३)"—इत्यड़ागमः । "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियसासः" अत्यन्त प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिप्यड़ागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत् ।

* ऋ० वे० ७, ४ १८, २ ।

"दधानश्रोभे"-"दधानोभे"—इति पाठौ, "सतोधनं"-"सतू-धनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३
सवर्द्धितावर्द्धनःपूयमानः

१ २ ३ २ ३ १ ३ १ २
सोमोमीढ्वाँ३अभिनोज्योतिषावीत्।

१ २ ३ १ २ ३ १ २ ३ १
यत्रनःपूर्वपितरःपदज्ञाः

३ १ २ ३ १र १र २ १
स्वर्विदोअभिगाअद्रिमिष्णान् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरचतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः सूर्यं जानन्तो वा "नः" अस्माकं "पूर्वं" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" शिलो-च्चयम् "अभि" लक्ष्य गन्तुम् "इष्णान्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णान्"-"ष्णान्"—इति च ॥ ३ ॥ ४

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।

॥ गौरीवित्तम् ॥ आजा । गृवा३यिः । विप्रज्ञताम् । मतीनाꣳसोमःपुनानोअसदच्चमूषू२३ । सापन्तिया ३ १ २३म् । मिथुनासोनिकामाप्ध्वर्य्या । वोरथिरा३१२३ । सःसोवा । ह्वाप्स्तोईहायि ॥(१) सपु । नाना३ः । उपसूरायि । दधानःओभेअप्रारोदसीवीषआवा२३ः । प्रायाचिद्या३१२३ । स्यप्रियसासजतीसापुतोधा । नाङ्कारिणा३१२३यि । नप्रोवा । यापꣳसोईहायि ॥(२) सवद्धिता३ । वर्द्धनःपू । यमानःसोमोमीढाꣳअभिनोज्योतिषावा२३यित् । याव्चनःपू३१२३ । वंपितरःपदत्वाःस्वप्वर्वायि । दोअभिगा३१२३ः । भद्रोवा । बाप्यिष्मोईहायि(३) ॥ १४ * ॥ [१]

॥ अग्नम् ॥ आजा । गृविर्विप्रक्तताम् । मती३

* ऊ० गाँ० ६प्र० १ख०-२४सा० ।

नाम् । सोमःपुना । नो३अस । दक्षमूषू । सपन्ति
यम्मिथुनासो । निकाऽ२३माः । अध्वर्य्यवो । रथिरा ।
सा३४३ः । सूक्राऽ५स्ता६५६ः ॥(१) सापू । नानउपक्षू
रे । दधाइनाः । ओभेअपाः । रो३दसी । वीषआ
वाः । प्रियाचिद्यस्यप्रियसा । सजऽ२३ऽौ । सतोधनाम् ।
कारिणे । ना३४३ । प्रा३याऽ५ऽसाई५६न् ॥(२) सावा ।
धितावर्द्धनःपू । यमाइनाः । सोमोमीढ्वाऽ । अभि
नः । ज्योतिषावीत् । यत्रनःपूर्वपितराः । पदाऽ२३ज्ञाः ।
सुवर्विदो । अभिगाः । आ३४३ । द्रा३यिमाऽ५यिष्णा
६५६म् (३) ॥ ५ * ॥ [२]

॥ यज्ञायज्ञीयम् ॥ आजाऽ५ग्न् । वाइर्वाइयिप्रच्छ
नाम् । मातीनाऽसोमःपुनानोअसा । दा३क्षामूइषू ।

---

* ऊ० गा० १०प्र० १ख० ५गा० ।

सपा२न्नियन्मिथुनासोनि । कामा२३ध्वा । ऊध्वायि ।
ध्वा३र्य्या । वोरथिदासःसू२ष्व्वक्ताउ ॥(१) तासाः । पुना
नउपब्रुरेदधानश्रोभेश्रप्रारोदसी । वी३षाश्रा ३ वाः ।
प्रिया२ चिद्यस्यप्रियसासः । ऊतौ२३सा । ऊध्वायि ।
तो३धा । नाङ्कारिणेनप्रा२यंऽउ ॥(२) सात्वाः । वह्नि
तावह्निनःपूयमानःसोमेमीढ्वाँऽश्रभिनो । ज्यो३तीषा३वी
त् । यनाः२नःपूर्वेपितरःप । दज्ञा२३:सू । ऊध्वायि ।
वा३र्वायि । दोश्रभिगाश्राद्रा२यि । मिष्णाउ । वा२३
४५(३) ॥ ११* ॥ [३]

॥ गोष्टङ्कम् ॥ आजागृविर्विप्रः । ऋता३म् । मा
२३४ । तीनाऽसोमः । पूना । नोश्रसदञ्चमूषुसपन्ति
यन्मिथुनासोनिकामा२ध्वर्य्यौ२ । वा२जजवायि । वोरा

* ऊ० आ० १८प्र० १ख० १३ना० ।

थि। रासःसोवा३ओ२३४वा। हा५स्तो ६ हायि॥(१) सपुनानउप। हरा३यि। दा२३४। धानओभेअ। प्रारो। दसोवीषआवःप्रियाचिद्यस्यप्रियसासऊतीसा२तो धा२। हा२ऊऊवायि। नक्कारिणेनप्रोवा३ओ२३४वा। या५ऽसोई हायि॥(२) सवर्ह्नितावह्न। नःपू३। या२३ ४। मानःसोमोमी। ह्वाऽआ। भिनोज्योतिषावीद्य अनःपूर्वपितरःपदज्ञाःस्व२र्वा२यि। हा२ऊऊवायि। दोअभिगाअद्रोवा३ओ२३४वा। आ५यिष्णो६हा यि(३)॥१०*॥[४]४

अथ माचिदन्यदिति प्रगाथात्मकं द्वितीयसूक्तं—

प्रथमा।

माचिदन्यद्विशऽसतसखायोमारिषण्यत।
इन्द्रमित्स्तोतावृषणऽसचासुतेमुहुरुक्थाचशऽसत॥१†॥

* ऊ० गा० २६प्र० २ख० १०सा०।

† छ० आ० ३, १, ५, १० (ऐभा० ५०० पृ०) = ऋ० ८० ५, ७, १०, १।

हे "सखायः" समान-ख्यानाः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे प्रशास्त्रादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥१॥

अथ द्वितीया।

३ १ २ ३ १ २ १ २ ३ १ २र ३ १ २
अवक्रक्षिणंवृषभंयथाजुवङ्गान्नचर्षणीसहम्।
३ १ २ ३ १ २ ३ १ २र ३ १ २
विद्विषणꣳसंवननमुभयङ्करंमꣳहिष्ठमुभया[redacted]।२*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्[redacted]प्रगणोलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषभमिव† "चर्षणीसहम्" मनुष्याणां शत्रुसुतानामभिभवितारं, "विद्विषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधानेनोपेतम् [यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितव्येनोपेतम्। अथवा उभयविधैः स्तोतृभिर्द्दिष्टृभिश्चोपेतम्]—एवंविध मिन्द्रमितस्तोतेति पूर्वेणान्वयः॥

* ऋ० वे० ५, ७ १०, २।

† 'गां न—न-शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।

“शुवं”-“शुरं”—इति पाठौ, “संवननं”-“संवननंमा”—इति च॥ २॥ ५

॥ मैधातिथम्॥ माचिदन्यद्वोहायि। विश्वाऽ३सा
ता। सखाया२हो१यि। माऔ३हो। रायिषाउवा।
ण्यातताउवा। इन्द्रमित्स्तोतावृषणाऔ३हो। साचाउ
वा। सुताउवा। मुहुरुक्थाऔ३हो। चशा। औहो।
वाहोर३४वा। सा५तो६हायि॥(१) मुहुरुक्थोहायि।
चशा३ऽसाता। मुहुरु३हो१। क्थाऔ३हो। चाशा
उवा। साताउवा। अवक्रक्षिणंवृषभाऔ३हो। याथा
उवा। जूवाउवा। गाम्नचाऔ३हो। षणा। औहो।
वाहोर३४वा। सा५हो६हायि॥(२) गाम्नचोहायि।
षणा३यिसाहाम्। गाम्ना२हो१यि। चाऔ३हो। षा
णाउवा। साहाउवा। विद्वेषणाऽसंवननमाऔ३हो।

१ २ १ २ १ २ १ २
भायाउवा । काराउवा । काराउवा । मंहिष्ठमाऔ

२ १ २र १ २र ५ ४
हो । भया । औहो । वाहो२३४वा । वा५यिमो

५
६हायि(३) ॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ १र २र १ २ ३ १ २
उदुत्येमधुमत्तमागिरःस्तोमासईरते ।

१ १ २ ३ १र १र ३ २ ३ १ २
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरः" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र ! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्ध्वं प्रसरन्ति [ईर गतौ आदादिकः (आ०) ] । तत्र दृष्टान्तः—"सत्राजितः" सदैव शत्रून् जयन्तः "धनसाः" धनानि सम्भजन्तः [वन षण सम्भक्तौ (भ्वा० प०), "जन-सन-खन-क्रम-गमो विट् (३, २, ६७)", "विड्वनोरनुनासिकस्यात् (६, ४, ४१)"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [क्षियो भावे निष्ठा, "निष्ठायामण्यदर्थे (६, ४, ६०)"—इति

---

* ऊ० गा० ६प्र० १ख० १५सा० ।

† उ० आ० १, २, १, ८ (१आ० ५१८ इ०) = ऋ० वे० ५, ७, १०, ५ ।

पर्युदासाद्दीर्घाभावः अतएव "च्चियो दीर्घात् (८, २, ४६)" —इति। निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, वाचि "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः ], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्तत उत्तिष्ठन्ति तद्वदुदीरतइत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३१२१ १२ ३ २३२ ३ १२
कण्वाइवभृगवःसूर्य्याइवविश्वमिद्धीतमाशत।
२ ३ १ २ ३२ ३ १२ ३१२
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" स्तुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यान्तम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्संज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [ स्वृ शब्दोपतापयोः भौवादिकः (प०) ॥

"आशत"-"आनशः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० सं० ५, ७, २८, १।

† अथाह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्य्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत्—इति पादपूरणः'—इति वि०।

¶ अथाह यास्कः —"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ३, १७।

५ ४ २ ४ ५ ४ ५ १
॥ अभीवर्त्तम् ॥ उदू३त्ये३माधमत्तमोवा। गायिर

२र र १ २ १ र २
स्तोमा। सआयिरा१ता२यि। साआजितौ३१२३४।

३ ४र ५ २ १ २ र १ २ ३ १
धनमाञ्च। चितोता१या२ः। वाजाया१न्तार२ः। रथाइः।

१ ३ १ १ १ १ ५र ४ २ ४ ५र ४
आर२३४५यि। वा२ ३ ४ ५ ॥(१) वाजा३रा३न्तोरथाइवो

५ १ २ १ २ १ र २
वा। वाजयन्तः। रथाआ१यिवा२। काण्वाइवा३१२३

३ ४ ५र २ १ २ १ २
४। भृगवःस्थ। रियाआ१यिवा२। विश्वामा१यिद्वौ२।

१ २ १ २ १ १ १ १ ५ ४ १ ४
तमा३। शा२३४५। ता२३४५ ॥(२) विश्वा३मा३यिद्वो

५र ४ ५ १ २र १ २ १
तमाशतोवा। वायिश्वमिद्वो। तमाशाता२। आयिन्द्र९

र २ १ ४५ २ १ २ १
स्तोमा३१२३४यि। भिर्मद्य। तआया१वा२ः। प्रिया

३र २ १ ३ १ १
सा१ यिधा२। सोआ३। स्वा२३४५। रा२३

१ १
४५न्(३) ॥ १६* ॥ [१] ६

---

* ऊ० गा० ६प्र० १ख० १६सा०।

अथ पर्यूष्विति तृचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा ।

१ २ १ २र २ १ १ २ २ १ २ ३ १ २ २ १ १ २
पर्यूषुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः ।

२ १ २ १ २ २ १ २
द्विषस्तरध्याऋणयानईरसे ॥ १* ॥

हे सोम! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि प्रधन्व" परितः प्रगच्छ [ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छसि ।

"ईरसे"-"ईयसे"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ १ २ १ १ १ २ ३ १ १ २ १ १ २ १ १
अजीजनोहिपवमानसूर्यंविधारेशक्मनापयः ।

१ २ ३ १ २ ३ १ २
गोजीरयारंहमाणःपुरन्ध्या ॥ २† ॥

हे "पवमान" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्यम्"

* ऋ० भा० ५, १, ५, २ (ऋ भा० ८०१ पृ०)=ऋ० वे० ७, ५, २२, १ ।
† ऋ० वे० ७, ५, २२, २ ।

"अजीजनः हि"* उत्पादितवान् भवसि खलु। कीदृशः? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतृणां प्रेरित-पशुकेमेऽर्थः, तादृशेन†; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्यमजीजनः॥ २॥

अथ तृतीया।

अनुचित्वासुतꣳसोममद्रामग्नि॥ ३¶॥ ७

—इति तृतीयाया ऋचः प्रतीकमिदम। सा चान्यत्र (५,१,५,६=१भा० ८७७पृ०) व्याख्याता॥ ३॥ ७

॥ ग्रावाश्वम्॥ परा३१यि। ऊ३धू। प्रध। न्वा
हवा। एहियाजा। सातयेपा। रि। वृत्रा२। एहि
या२। णिसत्त्वणायिद्वा३यिषा३ः। ता२३४रा। ऐषा
२यि। एहिया२। धिया‌कृणायाना३ई३। रा३४पुसो
६हायि॥(१) अजा३१यि। जा३नो। हिप। वा३मा।

* 'हि-इति पद-पूरणः'—इति वि०।

† गोजीरया रंहमाण'—गोजीरेण संयुक्तया दध्ना वा मिश्रया, रंहमाणः वेगेन गच्छमानः'—इति वि०।

‡ 'पुरन्ध्या'—उदकेन —इति वि०।

¶ छ० आ० ५, १, ५, ६ (१ भा० ८७७ ०,=ऋ० सं० ७, ५, ११, १।

एहिया। ना। हरियंवायि। धा। रेशा२। एहिया २। क्ष्मनापृषोगो३जी३जी३। रा२३४या। ऐहा२यि। एहिया२। रणुक्षमाणाःप्३रा३म्। धा३४५यी६ हायि॥(२) अनु३१। हा३यित्वा। सुतम्। सो३म। एहिया। षा। दामसिमा। हे। समा२। एहिया २। यराजियेवा३जा३। आ२३४भो। ऐहा२यि। एहिया२। पवमानाप्रा३गा३। हा३४५मो६हा यि(३)॥ १८ *॥ [१]

॥ आन्धीगवम्॥ पर्य्युषुप्रधा१न्वावा। जसात। येपा२३री। ऊम्मा२१ऽ३। वृत्राणिमत्त्णािर्द्विषस्तरा२३ ४५। धारया३उवार्णा२या। ना२३ई। रसा। औ ३होवा॥(१) अजीजनोहिपा१वामानहरि। यंवा२३

* ऊ० गा० ६प्र० १ख० १८सा०

२ १ २र १ २र १र २ ३ १ १ १ १
यिधाऊम्मा २१ऽ२। रेभ्रक्मनापयेगोजीरयार ३ ४ ५।

१ २ २ २ १ १
रा९हा३उवा। मा २पगम्। पू२३राम्। धिया। औ

४ ५ २ र २ १ र
३होवा॥(२) अनुह्वित्वासुता१९सोमा। मदाम। रु

२ १ १र २र ११ र २ ३ १ १
मा२३हे। ऊम्मा २१ऽ३। समर्यराज्येवाजा९अभीर३

११ २ २ १ १ २
४५। पावा३उवा। मा २ना। प्रा२३गा। हसा। औ

४ ४
३होवा। होऽ५ई। डा(३)॥ १८*॥ [२]

३ र४ २ ४
॥ विराट्सुवामदेव्यम्॥ पाऽ५रि। जष् ३ प्रा३भ्र

र ५ १ र २र १ २ १र २ १ २ १
न्वावा। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त। रा।

२ र २ १ र र र ४ १
औ३होहायि। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त।

२ र २ १ २ ३ र २
रा। औ३होहायि। धियार३क्षणयाः। नऔहो३।

१ १ २ ३ र ४
ऊम्मा २। राऽ२सो३५हायि॥(१) आऽ५जी। जनो३

४ ५ १ र २ १र २र १ २र १ २र १र २र १
यिपवमा। ना। हरियंविधारेभ्रक्मनापयेगोजीर।

* ऊ० गा० ६प्र० १अ० १८सा०।

आ। औ३होहायि। मा। हरियंविधारे अक्मनापयोगो

और। या। औ३होहायि। र९हा२३माणः। पुरी

हा३। ऊम्मा २। धा॒२ये॑३५हायि॥(२) आ॒५मु।

ष्टिवा३ह३त९सोमा। मा। दामसिमद्वेसमर्थ्यराज्ये

वाजा९च। भा। औ३होहायि। मा। दामसिमद्वेसम

र्थ्यराज्येवाजा९च। भा। औ३होहायि। पवा२३मा

माना। प्रगौहो३। ऊम्मा २। हा॒२सो३५हा

यि(३) ॥ ८* ॥ [३]

॥ गौरीवितम् ॥ परि। ऊपू३। प्रधन्वावा। असा

तयेपरिवृता२३। णायिसस्णा३१२३यिः। द्विषा५स्तरा।

ध्याऋणाया३१२३ः। नओवा। रा५सो६हायि(१) ॥ ५† ॥ [४]

---

* ऊ० गा० ६प्र० २ख० ८गी० ।

† ऊ० गा० १०प्र० २ख० ५गी० ।

॥ औकोनिधनम् ॥ अजा३यिजनोह्विपवमा। नस्।
रियंविधारेभक्मना २ पाया २ः। गोजा२यिरायार२।
र(१)हस्रा२३४णाः। पुरम्। धा२या२३४औहोवा। औ
होवा। ओ२३४का:(२) ॥ ६ * ॥ [५] ७

अथ परिप्रधन्वेति-तृचात्मकं पञ्चमं सूक्तम्—

तत्र प्रथमायाऋचः

परिप्रधन्व ॥ १ † ॥

—इति प्रतीकमिदम्। सा चान्यत्र ( ५, १, ५, १—१भा० ८६८पृ० ) व्याख्याता ॥ १ ॥

अथ द्वितीया।

एवामृताथमर्त्येचयाय
सभृक्कोअर्षदिव्यःपीयूषः ॥ २ ‡ ॥

* ऊ० गा० २०प्र० २ख० ६सा०।

† छ० आ० ५, १५, १ ( १भा० ८६८पृ० )=ऋ० वे० ७, ५, २०, १।

‡ ऋ० वे० ७, ५, २०, २।

हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरणाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व चर ॥ २ ॥

अथ तृतीया।

२ २ ३ १ २ २
इन्द्रस्तेसोमसुतस्यपेयात्

२ ३ १ २ ३ १ २ १ २
क्रत्वेदक्षायविश्वेचदेवाः ॥ ३ * ॥ ८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव स्वभूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु ॥

"पेयात्"-"पेयाः"—इति पाठौ ॥ ३ ॥ ८

१ १ १
॥ वाङ्निधनंसौहविषम् ॥ प। येपारी। प्रधन्वा।

२ १ २ २ २ १ २र १
होवाइहोयि। इन्द्रायसोमा। होवा२होयि। स्वादु

२ २ १ २ २ ३ ५ ४
र्मित्राया। होवाइहो२३यि। पूष्णौवाओ२३४वा। भ

* ऋ० वे० ७, ५, २०, २।

गा५याउ ॥(१) एव । एआयिवा । एव । एआयिवा ।
अमृताया । होवा ३ होयि । मह्यसयाया । होवा ३
होयि । सग्नक्रोमर्षा । होवा३हो२३यि । दिव्यौवा
ओ२३४वा । पीयूषाउ ॥(१) इन्द्रः । एआयिन्द्राः ।
इन्द्रः । एआयिन्द्राः । तेसोमा । होवा३होयि । सु
तस्यपेयात । होवा३होयि । क्रत्वेदक्षाया । होवा ३
हो २ ३ यि । विश्वौवाओ २ ३ ४ वा । वहा५यिवाउ ।
वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाओहोहायि । न्वाई२३४
न्द्रा । यमोमा२३४हायि । स्वादुमित्रा३३ । औहोवा ।
इहा२३४हायि । उऊवा२३४या । पू । ष्णायिभगा३४ ।
औहोवा । इहा२३४हायि । औहो३१२३४ । या । ए

* ऊ० गा० ६प्र० १ख० २०गा० ।

५ १र२ २२ १ १ ५ ५
ह्वियाई६हा ॥(१) एवाम्हतास्रौहोहायि। यामार२३४हे।
१ २ १ ५ १ र २ ३र ४र ५ १ २
स्रयायार२३४हायि। मघुकोम्रा३४। स्रौहोवा। इहा
५ २ ३ ५ २ १ २ १ ३र ४र
२३४हायि। उरुवार२३४पा। दित्याःपीयू३४। स्रौहो
५ १ २ ५ ३र १ ५र
वा। इहार२३४हायि। स्रौहो३१२३४। षाः। एह्विया
५ २ र र र १ २ २ १ २
६हा ॥(२) इन्द्रस्तेसोमौहोहायि। मासु२३४ता। स्य
१ ५ १ र २ ३र ४र ५ १ ३ ५
पेयार२३४ह्वायि। क्रत्वेदचा३४। स्रौहोवा। इहा २ ३
५ २ ३ ५ २ १ २ ३र ४र
हायि। उरुवार२३४या। वि। स्वायिचदा३४। स्रौहो
५ १ ३ ५ ३र २ ५र
वा। इहार२३४हायि। स्रौहो३१२३४। वा। एह्वियाई
५ २
हा। होपुइ। डा ३) ॥ १०* ॥ [२]

२ १ २ ५ २ ३ ५ २ १
॥ सप्तम् ॥ परिप्रा३धान्वाई२३४न्द्रा। यसोमार२३।
२ ५ २ १ २ ४ २ ५
स्वा३२३४दूः। मित्रा। यपूष्ण३भा३। गा३४५यो६हा
यि(३) ॥ ८ † ॥ [३]

* ऊ० गा० ८प्र० २ख० १०। ।
† ऊ० गा० १०प्र० १ख० ८६। ।

२ १ २ ५ १
॥ वाजदावर्यम् ॥ परिप्रधा। न्वार्२ई२३४द्रा। या
२ ५ १ २
२सो२३४मा। स्वा२दूः। मा२३यित्रा। या
१ २र १ ५ ४ ५ २र र
२पू। च्चोभो२३४वा। गा५योई्हायि ॥(१) एवामृता।
१ २ ५ १ २ ५ १
या२मा२३४चे। चा२या२३४या। सा२प्रृ। क्षो२३
२ १ १ २ १ ५ ४ ५
श्रा। षा२हायि। व्यःपो२३४वा। यू५षोई्हायि ॥(२)
२ र १ २ ५ १ २ ५
इन्द्रस्तेसो। मा२सू२३४ता। स्या२पे२३४यात्। क्रा२
१ २ १ २र १ ५ ४
त्वे। दा२३त्ता। या२वायि। स्व चो२३४वा। दा५
५
यिवोई्हायि(३) ॥ ७* ॥ [४]

२१ १ २ ५ १२
॥ स्वर्निधनम् ॥ परी३होयि। प्रधा२३४न्वा। इन्द्रा
१ २ ५ २र २ १ २
३हो। यसो२३४मा। स्वादू३हौयि। मित्रा
५ २र २ १ २ ५ ४र ५र
२३४या। पूष्णे३होयि। भगा२३४या। पूष्णे
४र ५ २र २ २ २ ४
भगाय। पूष्णा३४३। हो३४३यि। भा३गा५या६

* ऊ० गा० १२प्र० १ख० ७सा०।

५६ ॥(१) एवा३होयि । अमृता२३४या । महे३होयि । क्षया२३४या । सम्रा३हो । क्रोआ२३र्षा । दिव्या३होयि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या३४३ः । हो३४३यि । पौ३यू५षा६५६ः ॥(२) इन्द्रा३हो । तेसो२३४मा । सुता३हो । स्यपे२३४यात् । क्रत्वे३होयि । दक्षा२३४या । विश्वे३होयि । चदा२३४यिवाः । विश्वेचदेवाः । विश्वे३४३ । हो३४३यि । चा३दा५यिवा६५६ः । ए३ । सुवर्वते२३४५(३) ॥ ४* ॥ [५]

॥ वाजजित् ॥ परिप्रधन्वा । होवा३होयि । इन्द्रायसोमा । होवा३होयि । स्वादुर्मित्राया । होवा३होयि । पूष्णेभगाया । होवा३होर् । वा२३४औहोवा ॥(१) एवामृताया । होवा३होयि । महेक्षया

---

* ऊ० गा० १४प्र० १अ० ४सू० ।

या। होवा३होयि। सप्तुक्रोअर्षा। होवा३होयि।
दिव्यःपीयूषाः। होवा३होर। वा २ ३ ४ औहोवा॥
इन्द्रस्तेसोमा। होवा३होयि। सुतस्यपेयात्। होवा
३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः।
होवा३होर। वा२३४औहोवा। वाजीजिगीवाविश्वाध
ना२नी२३४५(२)॥ ६*॥ [६]

॥ पौष्कलम्॥ परिप्रा३ध। न्याई२३४न्द्रा। यसो।
मास्वा२३४दूः। मित्रा। या२३४५। पू६५६। ष्णा
गाया२३४५(१)॥ १८†॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य
द्वितीयः खण्डः॥ २॥

---

* ऊ० गा० १७प्र० २अ० ६सा०।

† ऊ० गा० ११प्र० १अ० १८सा०।

अथ तृतीय-खण्डे—

सूर्य्यस्येवेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २   ३ १ ०   ३ १ १
सूर्य्यस्येव रश्मयो द्रावयित्नवो

३ १ २ ३ १ २   ३ १ २
मत्सरासः*प्रसुतः साकमीरते।

१ २ ३ २उ ३ १ २   ३ १ ०
तन्तुं ततं परि सर्गास आशवो

१ २ ३ २ २ ३ २ ३ २ ३ २
नेन्द्रादृते पवते धाम किञ्चन ॥ १† ॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्य्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तुं" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति। ते सोमाः "इन्द्रादृते" इन्द्रं वर्जयित्वा अन्यत् "किञ्चन धाम"‡देव-शरीरं लक्षीकृत्य "न पवते"

---

* "प्रसुवः"—इति ऋ०-पाठः।

† ऋ० वे० ७, २, १२, १।

‡ 'इन्द्रं मुक्ता नान्यत् सोमस्य स्थापनमस्ति'—इति वि०।

न गच्छन्ति ॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयामीन्द्रस्य प्रिय-धामानि"—इति मन्त्र वर्णादवगम्यते ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ २ ३ १ १
उपोमतिःपृच्यतेसिच्यतेमधु

३ १ २ ३ २ ३ १ १
मन्द्राजनीचोदतेअन्तरासनि।

१ २ ३ १ २ ३ १ २ ३
पवमानःसन्तनिःसुन्वतामिव

१ २ ३ १उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति ॥ २* ॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [ पृची सम्पर्के ( रु० आ० ) ]। तथा "मधु" मद-करः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तु-भिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः ( अदा० आ० )—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [ आस्य-शब्दस्य "पद्दन्नोमासित्यादिना ( ६, १, ६३ ) आसन्नित्यादेशः ]। किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः "सुन्वताम्" अभिषुतवतां यजमानानां सम्बन्धिनी,

---

* ऋ० वे० ७, २, २१, २।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्ततिः कर्म-सन्ततिः एवं सोमस्य धारयेति'—इति वि०।